अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला–२

पूज्यपादमोरारिबापूसूत्राणि

# रामायणी विश्वचेतना

(पूज्यपादमोरारिबापुमहाभागानां कथांशानां संस्कृतानुवादः)

प्रवक्तारः
मोरारीबापुपूज्यपादाः

अनुवक्ता
डॉ. हर्षदेवमाधवः

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः

राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला.०२

पूज्यपादमोरारिबापूसूत्राणि

# रामयणी विश्वचेतना

(पूज्यपादमोरारिबापूरमहाभागानां कथांशानां संस्कृतानुवादः)

रचनाकारः
डॉ. हर्षदेवमाधवः

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
२०२०

शीर्षकम् — रामयणी विश्वचेतना

रचनाकार: — डॉ. हर्षदेवमाधव:

प्रधानसंपादक: — आचार्य: श्रीनिवास: वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादक: — आचार्य: मधुसूदन: पेन्ना
संचालक: संशोधन–प्रकाशनविभाग:
क.का.सं.वि., रामटेकम्

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीना गाणु, नागपुर.

प्रकाशनवर्षम् — २०२०

आवृत्ति: — प्रथमा

मूल्यम् — **370.00**

आय.एस.बी.एन. — 978-8183-153-683

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

मुद्रक: — एस.के.प्रिन्टर्स, दिल्ली

प्रकाशक: — कुलसचिव:,
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालय:,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.

तथा
न्यु भारतीय बुक कार्पोरेशन, नवी दिल्ली





## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success. My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

**Chief Patron**
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

**Patron**
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

**AIOC President**
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

**AIOC General Secretary**
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

**AIOC Local Secretary**
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

**Additional Local Secretary**
Dr. Harekrishna Agasti
Dr. Dinakar Marathe
Dr. Kalapini Agasti
Dr. Parag Joshi

**Organising Committee**
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

Ramayani Vishvachetana
[Translation of Ramakatha episods from Ramakathas of Pujya H.H.moraribapu]
Tr. by Dr. Harshdev madhav

First edition 2018



## रामायणी विश्वचेतना : अनुवाद का नूतनप्रयोग

विश्ववन्द्य पुण्यश्लोक पू. मोरारिबापू समग्र विश्व में कोने कोने में – भूमण्डल के पाँचों तत्त्वों के बीच रामायण कथा का गान करनेवाले अनन्य कथाकार हैं। उन्होंने रामकथा में कई प्रयोग कर के रामकथा को संगीतमय, भक्तिमय, साहित्यमय, लोकचेतना और आध्यात्मिक चेतना से विश्वव्याप्त बनाया है, इतना हि नहि सभी देशों की संस्कृतियों, धर्मो और जातियों को रामकथा के साथ जोड़ने का भगीरथोत्तम पुरुषार्थ किया है। असंख्य रामकथाओं के माध्यम से विश्वसंस्कृति को महान योगदान दिया हैं। उनकी कथाओं में वैदिक संस्कृति को दृढमूल करने की ऊर्जा तो है हि लेकिन कहीं संकीर्णता नहीं है, संप्रदायों का हठाग्रह नहि है। उनकी रामकथा में विश्वधर्म, मानवधर्म और विश्वसंस्कृति का त्रिवेणी संगम है, काव्य और शास्त्र का प्रवाह है। उन्होंने लोक को श्लोक से जोड़ने का उत्तम कार्य किया है। पूज्य बापू एक व्यक्ति नहि है, वे स्वयं जीवंत किंवदन्ती (Living legend) हैं।

संस्कृत के सुधी पाठकों को रामायण की बापू की श्रीवाणी से निःस्यन्दित विश्वचेतना से अवगत कराने के लिए अनुवादकने यह श्रम किया है। हाँ, बापू की वाणी मध्यमा और पश्यन्ती की वाणी है – ऐसा अनुभव शैशव से आज तक होता रहा है, इसलिए बापू की वाणी को गीर्वाण गिरा में अवतीर्ण करने के साथ सूत्रनिर्माण हुआ है। उनके 'सूत्र' स्वयं हि सरस्वती की कृपा से साथ में बनते गये। कहीं कहीं कुछ बातें

याद आयी तो वह कोष्ठक [ ] में लिखी हैं। पूज्य, बापूने अपनी व्यस्तता से समय निकाल कर प्रेरणा प्रोत्साहन और मार्गदर्शन भी दिया है।

परम पूज्य बापूने प्रत्येक देश और प्रत्येक धर्म के सिद्धान्तों के साथ रामकथा का सेतु रचा है, वैश्विक सन्दर्भ दिये हैं वह अपने आप में एक 'अद्‌भुत-तम' ब्रह्माण्ड-व्याप्त वाणी का दिव्यरूप है। इसलिए गालिब कहते हैं वैसे हि यहाँ फरिश्तों की पाँख के स्पर्श और फरफराहट का अनुभव होता है। यह सब पू. बापु का हि है इसलिए 'त्वदीयवस्तु मुरारे ! तुभ्यमेव समर्पये।' यही भाव के साथ अनुवादक कृतार्थता एवं धन्यता का स्वानुभव अपने पास रखने की अनुमति चाहता है।

**- डॉ. हर्षदेव माधव**



# अनुक्रमणिका

## १. मीरां कृष्णभक्तेः पर्यायः ।

राजस्थाने चित्तोडगढस्थाने " मानसमीरां " इति विषये मम कथायाः प्रारम्भं करोमि । चैत्रसंवत्सरस्य प्रारम्भो जातः । २०१४तमे संवत्सरे मार्चमासस्य एकत्रिंशत्तम्यां तारीकायां मीरांयाः स्थाने नवरात्रीकाले रामचरितमानसस्य गानं करोमि । राजस्थानं वीराणां च धीराणां च भूमिरस्ति । किन्तु मेडतास्थानस्य कथा अवशिष्टा वर्तते । 'मीरां' इति नाम्नः कोऽर्थः ? इतिहासविदः विद्वांसः संशोधनेषु निमग्ना वर्तन्ते । किन्तु मम मतानुसारं मीरां कृष्णभक्तेः पर्यायः । वाद्येन मञ्जिरनादेन सह नृत्यन्ती, गायन्ती कृष्णनाम रटन्ती विश्वस्मै प्रेमलक्षणाभक्तेः कृते निमन्त्रयन्ती मीरां भक्तेः पर्यायः अस्ति । राधा श्रीकृष्णस्य आह्लादिनीशक्तिः, किन्तु मीरां श्रीकृष्णस्य आह्लादिनी भक्तिरस्ति ।

## २. राधायाः मीरां नेदीयसी ।

एकवारं वृन्दावने मम कथा प्रचलति स्म तदा केनापि महाशयेन पृष्टं यत् राधामीरांभ्यां का भवते रोचते ? भवान् ताभ्यां कां चेष्यति ? अहं निर्वाचनविषये न किञ्चिद् वदिष्यामि । मह्यं सत्यप्रेमकरुणा रोचन्ते । वृन्दावने यदि अहं भवेयं राधा मे रोचते इति न कथयेयम् तर्हि जना माम् ताडयेयुः । किन्तु अहं मन्ये यद् राधा आह्लादिनीशक्तिरस्ति, सा पराशक्तिः, किन्तु मीरां भक्तिरस्ति । सा अस्मत् समीपे वर्तते । गुजरातसौराष्ट्राभ्यां वृन्दावनं व्रजभूमिश्च दूरे वर्तते । अतः राधा दूरे वर्तते । भौगोलिकदृष्ट्या मीरां राजस्थानीया, सा समीपे वर्तते । रामचरितमानसं कथयति यत् –





**जोग जग्य जप तप ब्रत पूजा ।**

**रामहि सुमिरिअ गाईअ रामहि ॥**

यद्यपि योगः, यज्ञः, जपः, तपः, व्रतम्, पूजा – इत्यादीनि साधनानि वर्तन्ते, किन्तु कलियुगे रामस्य स्मरणं मोक्षप्राप्तेः उपायः । यद्यपि मीरांयाः मनसि कृष्णस्य स्मरणं भवति तथापि मीरां रामकृष्णयोः भेदं न करोति । अत एव सा गायति – '**पायोजी मैने राम रतन धन पायो ।**' वस्तुतः मीरांयाः कृते कृष्णस्य स्मरणम् एव रत्नमयं धनम् ।

## ३. मीरां कृष्णभक्तेर्विश्वासः, अस्तित्वस्य ध्रुवतारकः ।

मीरां पञ्चदश्यां शतब्द्यां जनीं लेभे । गगने कानिचित् नक्षत्राणि स्त्रीवाचकानि सन्ति यथा – रेवती, अनुराधा, चित्रा इत्यादयः । मीरां कृष्णभक्तेः पर्यायः अपि च विश्वासपूर्णस्य अस्तित्वस्य ध्रुवतारको वर्तते । मीरां कृष्णभक्तौ लीना विषमपि पिबति । गुर्जरकविः भगुभाई रोहडियामहोदयः एकस्मिन् गीतिकाव्ये मीरांयाः स्वगतोक्तिं प्रस्तौति – "**राणामहाराजाय कथयतु यत् – स पुनरपि विषं प्रेषयेत् विषं पाययितुम् अमृते परिवर्तयितुं मम स्वामी पुनरपि आगमिष्यति – इति मे विश्वासः इति ।**"

यदा त्वं भजनमार्गं गच्छसि, भक्तिमार्गं गच्छसि तदा विषमवश्यं पातव्यम् । रामचरितमानसं लिखति – "**विषम गरल जेहि पान**

**किय ।''** भगवान् महादेवः विषपानं चकार । मीरां महादेववद् विषपानं करोति । भगवद्भक्ता विषपानं कृत्वाऽपि प्रभुस्मरणं कुर्वन्ति । अत एव मीरां लोकलज्जां विहाय भक्तिं करोति ।

**''मेरे तो गिरिधर गोपाल दूसरो न कोई, साधु संग बैठ बैठ लोकलाज खोई ।''**

( मम तु गिरिधरः गोपालः, नान्यः । साधुसङ्गतौ उपविश्य लोकलज्जा त्यक्ता ।

**४. राधा कृष्णस्य नेत्रम्, मीरां कृष्णाश्रु ।**

मीरांतुलसीदासौ समकालीनो भवेताम् । मीरां तुलसीदासं प्रति एकं पत्रं लिलेख इति किंवदन्ती । तुलसीदासः प्रत्युत्तरे लिलेख यत् –

**''जाके प्रिय न राम – बैदेही ।**

**तजिये ताहि कोटि बैरी सम, जद्यपि परम सनेही ।''**

(यस्य सीतारामौ न प्रियो, कोटिशत्रुवत् त्याज्यः, यद्यपि सः परमस्नेही भवेत् ।)

मीरां प्रत्युत्तरति यत् – बरसाना मम देशोऽस्ति, किं मीरां योगिनी वर्तते अथवा गोपी ? मम मतानुसारं मीरां भगवतः कृष्णस्य भक्तेर्नर्तनं वर्तते, भक्तेर्गायनं वर्तते । मीरां गायति यत् –



**''अंसुवन जल सींच सींच प्रेम बेल बोई, मेरे गिरिधर गोपाल, दूसरो न कोई !''**

मीरां वियोगिनी वर्तते । सा वियोगस्य योगिनी । कृष्णप्रेमवल्लीं अश्रूभिः सिञ्चति । राधा कृष्णस्य नेत्रम्, किन्तु मीरां कृष्णाश्रुरूपा । मीरां ज्ञातुं स्वयमेव मीरां भवतु । यदि वयं पञ्चनिमेषपर्यन्तं मीरां भवेम, तदैव मीरायाः भक्तिं जानीयाम । अत एव मीरां कृष्णभक्तेः कीर्तनम्, कृष्णभक्तेः नर्तनम्, कृष्णभक्तेः गुञ्जनं वर्तते ।

**५. पृथिव्यां सुखमपि ।**

पृथिव्यां दुःखेन सह सुखम् अपि वर्तते । पञ्चसहस्रवर्षेभ्यः पूर्वं तथागतेन कथितं यत्, 'दुःखमस्ति, दुःखस्य कारणम् अस्ति, दुःखस्य हेतुरस्ति, तथागतस्य वचनानि सत्यवचनानि सन्ति । किन्तु इदमपि सत्यं वर्तते यद् – धरित्र्यां सुखमप्यस्ति, सुखस्य हेतुरप्यस्ति, सुखस्य कारणमप्यस्ति । दशरथः संततिरहितः आसीत्, अतः दुःखित आसीत् तदा कुलगुरुणा वसिष्ठेन कथितं यत्, 'हे राजन् ! धैर्यधना हि साधवः । भवान् धैर्यं धारयत्विति । यः साधकः गुरुचरणरजोमयं सौभाग्यं लभते तस्य रजोमात्रमपि दुःखं नश्यति ।'

**६. कथासु परमार्थबोधः, नेतिहासोऽन्वेष्टव्यः ।**

पुराणकथासु कथा वर्तन्ते । किंवदन्त्यः वर्तन्ते । अर्थवादः वर्तते । तत्र कामं, सत्यं न भवेत्, किन्तु अध्यात्मं भवेत्, बोधः भवेत्, अतः पौराणिकघटनासु इतिहासो न अन्वेष्टव्यम् ।

कल्पभेदेन पञ्चपरमार्थगाथा वर्तन्ते, शिबेः, दधीचेः, हरिश्चन्द्रस्य, रन्तिदेवस्य, बलेश्च – मानवतां त्रातुं एकाः कथाः सन्ति । गावो रक्षणीयाः, संस्कृती रक्षणीया, मानवता रक्षणीया । शिबेः कथा महाभारते वर्तते । अत्र जीवदया स्वीकर्तव्या । दधीचेः कथा समर्पणस्य कथा वर्तते । रन्तिदेवस्य कथा दानशीलतायाः करुणायाश्च कथा वर्तते । रन्तिदेवस्य कथा परेषां कृते सर्वस्य समर्पणस्य कथा वर्तते । बलेः कथा उत्कृष्टदानशीलतायाः कथा वर्तते । पञ्चकथासु परेषां कृते अन्येषां कृते त्यागो वर्तते । अयमेव परमार्थः । शिबेः कथायां देहस्य शकलाः न कर्तव्याः, किन्तु अस्माभिः देहाभिमानस्य नाशः कर्तव्य इति बोधः स्वीकर्तव्यः । दधीचेः कथा दुरितस्य संहारार्थं त्यागस्य कथा वर्तते । हरिश्चन्द्रस्य कथायां सत्यस्य रक्षणं वर्तते । शरीरनाशस्य चिंता नास्ति । शरीरनाशेऽपि धर्मः समाराद्यः ।

**७. मनोनाशे न बन्धो न मोक्षो वा ।**

नानकः कथयति, 'एक ओमकार सतनाम' इति । गोस्वामिनः कथयन्ति, '**सीयाराममय सब जग जानी**' । मीरां वदति, यत् —





**मेरे तो गिरधार गोपाल,**

**दूसरो न कोई ॥**

कृष्णः अर्थात् नृत्यं कुर्वद् अद्वैतम् । अद्वैतं निगडं नास्ति, न भवेद् वा । अद्वैतं नूपुरं भवेत् । मीरांयाः पादयोः अद्वैतस्य निगडबन्धनं नास्ति । तस्याः पादयोः अद्वैतस्य नूपुरं वर्तते ।

एकः संन्यासी माम् अपृच्छत्, 'किं बन्धः ?, किं मोक्ष ? इति । अहं अकथयम्, 'तात ! भवान् ब्रह्मविद्याम् अधीते । अहं किं वदामि ? वस्तुतः बन्धमोक्षयोः कारणं मनं एवास्ति । यदा मनो गच्छति, मनो नश्यति तदा संसारोऽपि नश्यति । मनसः त्यागे न बन्धः, न मोक्षः । किन्तु भक्तिमार्ग उपदिशति यत्, 'भवान् मनः ईश्वरेण सह युनक्तु, ततः पश्चात् न बन्धः, न मोक्षः वा ।'

**८. अस्तित्वान्न पलायनमुचितम् ।**

ये महापुरुषाः बभूवुः, ते संसारं त्यक्त्वा जग्मुः । किन्तु, अस्तित्वात् पलायनं नोचितम् । भवन्तः बुद्धपुरुषाः भवेयुः । बोधस्य पश्चात् विशिष्टरूपं प्राप्नुयुः । बोधिसत्त्वं भवितुं यशोदां त्यक्त्वा, राहुलं च त्यक्त्वा पलायनस्य नास्ति आवश्यकता । भवदस्तित्वं भवन्तं शप्स्यति, यदि भवान् पलायनं करिष्यति ।

## ९. सूक्ष्मं व्याख्यातुं स्थूलाश्रयः ।

सूक्ष्मं व्याख्यातुं स्थूलाश्रयः अनिवार्यः । अहं व्यासपीठाद् अवतरानि तदा डयनं कृत्वा न गच्छामि । अहं सोपानपङ्क्तिम् आश्रयामि । तथैव ईश्वरं ज्ञातुं मूर्तिपूजा भवति । रामलक्ष्मणौ लङ्कायां रणाङ्गणे रथविरहितौ आस्ताम् तदा इन्द्रः धर्मरथं प्रेषयामास । धर्मरथः अर्थात् सत्यरथः । धर्मरथः अर्थात् प्रेमरथः, करुणारथो वा । इत्थं स्थूलप्रतीकैः सूक्ष्मार्थाः प्रतिप्रादयितुं समर्थाः भवन्ति ।

## १०. भक्तेः मुक्तिरनुसारिणी ।

यः हरिं भजति, तस्य पृष्ठे मुक्तिर्धावति । ये वादविवादान् कुर्वन्ति, ते जीवनं व्यर्थं यापयन्ति । गोस्वामिनः कथयन्ति –

**राम भजत सोइ मुकुति गोसाई ।**

**अनइच्छित आवइ बरिआई ॥**

यो मनुष्यः स्वसुखं न लभते तस्य मनः स्थिरं न भवति । निजसुखम् अर्थात् आत्मनि सुखम् । तुलसीदासः कथयति –

**निज सुख बिनु मन होई कि थीरा ।**

**परम कि होई बिहीन समीरा ।**



पवनाद् ऋते स्पर्शः न शक्यः । यत्र शून्यावकाशः तत्र स्पर्शोऽपि असम्भवः । अतो ये वैज्ञानिकाः अवकाशं गच्छन्ति ते तरन्ति । अत एव रामायणे स्वार्थस्य परमार्थः लिखितः ।

**स्वारथ सोच जीव कहुँ एहा ।**

**मन क्रम बचन राम पद नेहा ॥**

यदा मनः ईश्वरचरणयोः स्थिरं भवति तदा मुक्तिः लभ्यते । स एव जीवनस्य परमस्वार्थः । मुक्तिः भक्तिमनुधावति ।

## ११. ( 'खजुराहो' स्थाने रामकथा । ) कामोऽपि देवः ।

खजुराहो स्थाने अस्माकं रामकथा पारायणं वर्तते । कतिपयवर्षपूर्वं कोणार्के सूर्यमन्दिरे मया रामकथा कृता । अहं तत्रापि शिल्पदर्शनं कृतवान् । पुनरपि खजुराहो स्थाने काममीमांसा कर्तुम् अहं प्रयत्नं करोमि । रामचरितमानसम् आधारीकृत्य पूज्यपादैः तुलसीदासैः कामचर्चा कृता । यथा –

**काम कला कछु मुनिहि न ब्यापी । निज भयँ डरेउ मनोभव पापी ।**
**सीम कि चाँपि सकइ कोइ तासू । बड़ रखवार रमापति जासू ॥**

तदेव मया मनसि निश्चितं यत् — कामम् अधिकृत्य पुनरपि कथागानं कर्तव्यम् । भगवान् शिवः तृतीयनेत्रेण कामं भस्मसात् चकार । पुनरपि शिवः तं मनोजं चकार । शिवेन मानसे प्रोक्तं यत् —

**जब जदुबंस कृष्न अवतारा ।**

**होइहि हरन महा महिभारा ॥**

शिवः कामदेव भस्मीभूतः चकार, अत एव श्राद्धदिवसेषुं इयं रामकथा कामदेवस्य श्राद्धरूपा। मया खजुराहो स्थाने कामशिल्पानां दर्शनं कृतम्, किन्तु मम मनसि न कापि विकृतिर्जाता। तत्र अश्लीलं वा बिभत्सं वा किञ्चिदपि नास्ति । सर्वेऽपि कृपया सूत्रमिदं श्रुण्वन्तु ।

**बहिः कामदेवः अन्तर्महादेवः ।** यदि भवन्तः स्मरिष्यन्ति भवन्तः सूत्रमिदं तदा न कदापि मनः विकृतं भविष्यति । मानसे गोस्वामिभिः कथितम् —

**तात तीनि अति प्रबल खल काम क्रोध अरु लोभ ।**

यस्य मनसि महादेवो विराजते, तस्य अहितं कामो न करोति । यदि चित्तं शुद्धं स्यात्, तदा सर्वे विकारा विगलिता भवन्ति । कामः, क्रोधः, लोभश्च एते त्रयः खलाः । किन्तु न कोऽपि क्रोधदेवम् इति वदति। न लोभः अपि देवः कथ्यते। मम देशस्य ऋषीणां अन्तःकरणस्य पवित्रवृत्या कामः देवपदे स्थापितः ।

रामचरितमानसे कथितं यत् तेजस्विनं कदापि लघुं वा क्षुद्रं वा गणयेति ।



## १२. कामवृत्तिः अश्वेव ।

कामदेवस्य महान् प्रभावः । किन्तु भक्तेः समीपे तस्य प्रभावः लघुकः । यदि मनसि भजनं न भवेत् , भक्तिः न भवेत् तदा एकः स्फुल्लिङ्गः अपि दग्धुं शक्तः । रामचरितमानसे लिखितं यत् —

**भए कामवस जोगीस तापस पावँरन्हि की को कहै ।**

**देखहिं चराचर नारिमय जे ब्रह्ममय देखत रहे ॥**

**अबला बिलोकहिं पुरुषमय जगु पुरुष सब अबलामयं ।**

**दुइ दंड भरि ब्रह्मांड भीतर कामकृत कौतुक अयं ॥**

यदि मनः भजनेन भक्त्या लग्नं भवेत् तदा इन्द्रियाश्वाः नियन्त्रणे भवेयुः । कामवृत्तिः वेगवती अश्वा । 'माणकी' इति – अश्वायाः एका जातिः । यदि मनः जपमालायां लीनं तदा कामवृत्तिरूपा अश्विनी न हानिं करोति । भक्तिरेव कामवृत्तौ पतनात् त्रायते ।

## १३. कामः परोपकारी ।

देवैः शिवसमाधिभङ्गं कर्तुं कामः प्रेषितः । इन्द्रेण आदिष्टं यत् — शिवः समाधौ वर्तते तं विक्षिप्तं कुरु, इति । कामदेवोऽजानात् – यत् मम मृत्युः निश्चितः, किन्तु अहं परोपकारार्थं गमिष्यामीति । कामः परोपकारी वर्तते । देवानां हितार्थं स प्राणान् त्यजति । शृङ्गाररसः जीवने स्वीकार्यः ।

किन्तु शृङ्गाररसः मृगया रसो न भवेद् इति ध्यातव्यम्। अतः कामदर्शनम् अपि निर्दोषमनसा शुद्धमनसा उद्घाटितमनसा भवेत्।

**रामचरितमानसे सप्तदर्शनानि।**

रामचरितमानसे सप्तदर्शनानि सन्ति।

**(१) रामदर्शनं केन्द्रस्थाने वर्तते।**

रामात् सीता न पृथक् वर्तते। अतः वाल्मीकेः सीतादर्शनं भव्यं वर्तन्ते। रामदर्शनेन सह सीतायाः, लक्ष्मणस्य, भरतस्य - एतानि सर्वाणि दर्शनानि सन्ति।

**(२) शिवदर्शनम् –** शिवदर्शनान्तर्गतं उमादर्शनं, हनुमद्दर्शनं च।

**(३) धर्मदर्शनम् –** दशरथ-जनक-शीलनिधि-सत्यकेतुचरितानि धर्मदर्शने वर्तते। रामस्य मातृणां कथाः धर्मदर्शने वर्तते।

**(४) अर्थदर्शनम् –** लङ्का-अयोध्या-मिथिला-हिमालय- इत्यादिनां समृद्धिः अत्र वर्तते। अयोध्यायाः समृद्धिः दैवी – लङ्कायाः आसुरी। मिथिलायाः समृद्धिः सात्विकी। हिमालयस्य समृद्धिः नैसर्गिकी।

रामचरितमानसे लिखितम् –

**जो संपदा नीच गृह सोहा।**

**सो बिलोकी सुरनायक मोहा॥**



इत्थं 'मानसे' समृद्धिवैपुल्यं वर्तते।

**(१) कामदर्शनम् –** कामदर्शनमपि विपुलं वर्तते। शरीरेण चेतसा शुद्धिं प्राप्य मन्दिरे प्रवेशः कर्तव्यः, तथैव कामदर्शनस्य पश्चात् आत्मदर्शनं कर्तव्यम्।

**(२) मोक्षदर्शनम्** - इदं दर्शनं भाग्यशालीनः कुर्वन्ति।

**(३) विश्वदर्शनम्** - इत्थं सप्तदर्शनेषु चिंतनं वर्तते। रजनीशः कथयति स्म, 'सत्यं मनसि वर्तते, अतः अन्तः अन्वेषय।' 'रामदुलारी बापु' इत्याख्यः महापुरुषः अवदत् – **'सत्यं सर्वत्र वर्तते, यत्र कुत्रापि अन्वेषय।'** गोस्वामिनः कथयन्ति यत् –

**सीय राममय सब जग जानी**

**करउँ प्रनाम जोरि जुग पानी॥**

अतः विश्वदर्शनं सप्तमं दर्शनम्। परमात्मनः उदरे समस्तब्रह्माण्डं वर्तते।

**उदरं माझ सुनु अंडज राया।**

**देखेउँ बहु ब्रह्मांड निकाया॥**

**१४. कामो रसो रामो महारसः ।**

यदा मया कोणार्के रामकथा कृता तदा श्रोतृवर्गाद् एकं निवेदनं आगतम्, यत् संस्कृतसाहित्ये बहूनि सूत्राणि वर्तन्ते । यथा – महर्षेः बादरायणस्य 'ब्रह्मसूत्रम्', नारदस्य 'भक्तिसूत्रम्', कपिलाचार्यस्य 'साङ्ख्यसूत्रम्', पतञ्जलेः 'योगसूत्रम्', गौतमस्य 'न्यायसूत्रम्' इत्यादीनि सूत्राणि सन्ति । सारसर्वस्वं संक्षेपेण वक्तुं सूत्राणि सन्ति । वात्स्यायनस्य 'कामसूत्रम्', अद्भुतो ग्रन्थः । तत्र वर्णनेषु अतिरेकः, किन्तु यदि समर्थः गुरुर्भवेत् तदा न काचित् समस्या । रामचरितमानसे यत् — कामदर्शनं वर्तते तत् प्रायोगिकं वर्तते । तुलसीदासस्य कामदर्शनम् औषधं वर्तते । रामचरितमानसे लिखितं यत् कामः कृष्णस्य पुत्रोऽस्ति ।

**कृष्ण तनय होइहि पति तोरा ।**

**बचनु अन्यथा होइ न मोरा ॥**

इत्थं कामः ईश्वरस्य पुत्रः अस्माकं विज्ञानं कथयति यत्, पितुः सर्वलक्षणानि आगच्छन्ति – पितुः स्वरः, पितुः स्वभावः, पितुः मुखाकारः एतत् सर्वम् । अत एतत् सिद्धं भवति यद् धर्माविरुद्धः कामो ब्रह्मरूपः । धर्मो यस्मै 'आम् कथयति अर्थात् यं स्वीकरोति स कामो ब्रह्म ।' उपनिषद् कथयति यद् **अन्नं ब्रह्मेति व्यजानात् ।** अतः वयं यत् खादामः तद् ब्रह्म । किन्तु यदा अधिकं खादामः तदा वमनं भवति । एवमेव कामातिरेकस्य वमनं भवति । कामः नास्ति खलः, कामी खलः । क्रोधो नास्ति असाधुः, क्रुद्धः असाधुः । लोभ नास्ति पापं, लोभी पापः वर्तते । यदा कामः आतृप्तेः सेवितः तदा औषधग्रहणं अनिवार्यम् । तुलसीदासस्य औषधं किम् ?

**जासु नाम भव भेषज हरन घोर त्रय सूल ।**

**सो कृपाल मोहि तो पर सदा रहउ अनुकूल ॥**

'हरिनाम' केवलम् औषधं वर्तते । हरिनाम्न औषधं त्रीन् सन्तापान् हरति, स भगवत्प्रियो भवति ।

'हरिनाम' जपे कोऽस्ति नियमः ? एकोऽस्ति नियमः । अथ किम् ? कठोरः नियमः । यं ज्ञात्वा स्वयमेव कामं पराजितं करोति , स 'हरिनाम' जपात् धन्यतां प्राप्नोति । जेतुं हठाग्रहान् त्यजन्तु । 'दानीस्ता' अर्थात् स्वयमेव ज्ञात्वा पराजयम् अवगम्यम् । अत्र गझलपङ्क्तिः वर्तते —

**इस खेल में एक दानीस्ता मुझसे हार गया,**

**यही एहसास मुझे जिन्दगीभर मार गया ।**

कृष्णेन राधायै वंशी प्रदत्ता, किन्तु स्वकण्ठः मीरायै प्रदत्तः । अतः कोऽपि कृष्णस्य कण्ठं श्रोतुं इच्छति चेत् तेन मीरांयाः भजनानि श्रोतव्यानि । (मीरां श्रोतव्या ।)

कृष्णः यदा धराधाम तत्याज तदा स सर्वमपि ददौ । अर्जुनाय भगवद्गीता, मोक्षः कंसाय, मित्रपदं श्रीदाम्ने, प्रणयः वज्राङ्गनाभ्यः, अश्रुबिन्दवः यशोदानन्दाभ्यां, ऋक्मिण्याः ऋते सर्वराज्ञीभ्यः द्वेषः – इत्थं कृष्णेन सर्वमपि दत्तम् ।

**१५. सत्सङ्गात् कामे रामोद्भवः ।**

गोस्वामिभिः कामः खलो मतः । '**तात तीनि अति प्रबल खल काम क्रोध अरु लोभ ।**'

कामक्रोधलोभाः त्रयः महाखलाः । इत्थं तुलसीदासेन कामाय गाली प्रदत्ता । किन्तु तेन एव उपायो दर्शितः ।

**खलउ करहिं भल पाइ सुसंगू ।** अर्थात् सत्सङ्गात् खलः शनैः शनैः साधुः भवति । कामोऽपि शनैः शनैः रामो भवति । कामो रसः , रामो महारसः । परमात्मा रसमयो वर्तते । '**रसो वै सः**' इति प्रसिद्धेः ।

**१६. जीवावश्यकता कामः ।**

ऋग्वेदे नासदीयसूक्ते कामस्य निर्देशः वर्तते । कामः प्रथमं जनिं लेभे । कामो मनसो रेतः आसीत् । कामः अर्थात् इच्छा । परं ब्रह्मणा कामः कृतः यत् — '**एकोऽहं न रमे, न रमते मे मनः**' अतः एकोऽहं बहु स्याम् । इति । परमात्मना इत्थं बहूभवितुं चिकीर्षा कृता, अतः सृष्टिप्रपञ्चो रचितः । अत एव कामेच्छा जीवस्य आवश्यकता, किन्तु इच्छातिरेकेन



मनुष्यः कामी भवति । '**काम बात कफ लोभ अपारा ।**' आयुर्वेदे महापुरुषैः कथितं यत् – वात-कफ-पित्तमयं मनुष्यशरीरं वर्तते । एते त्रयः दोषा अपि सन्ति । तेषां सम्यक् मात्रया मनुष्यः स्वस्थः निरामयो भवति, किन्तु एकस्यापि प्रकोपात् मनुष्य आतुरो भवति ।

**१७. इच्छास्तिस्रः ।**

रामचिरतमानसे तिस्रः इच्छाः कथिताः । इच्छाः त्रिधा वर्तन्ते – अधमा, मध्यमा, उत्तमाश्च —

**सुत बित लोक ईषना तीनी ।**

**केहि कै मति इन्ह कृत न मलीनी ।**

पुत्रेच्छाऽपि कामः तत्र कामः ईषत् चैतन्ययुक्तः । वित्तेषणाऽपि कामः । अयं कामो जडः । अयं मध्यमः कामः लोकैषणाऽपि कामः । प्रतिष्ठा अधमः कामः । परमात्मना मानवदेहं दत्त्वा यूयं प्रतीष्ठिताः कृताः । कस्मात् लोकैषणा ? भिक्षां न याचध्वम् । केचित् साधकाः अपि लोकैषणायां पतिता भवन्ति । कामोऽपि इच्छा, किन्तु कामस्य प्रकोपो न भवेत् । यदा विकारः वृद्धिं गच्छेत् तदा व्याधिः भवति ।

**१८. विषयेच्छा प्रकृतिः, अतिरेको विकृतिः ।**

परमात्मा समयपत्रकं रचयति । यः समयं संरक्ष्य विषयान् भुङ्क्ते सः प्रकृतिं जानाति । यः समयमर्यादां विस्मरति सः विकृतिं प्रति

गच्छति । विषयानाम् इच्छा प्रकृतिः, किन्तु कामानाम् उपभोगः विकृतिर्वर्तते। यदा मनुष्यः, कालं, सम्बन्धान्, स्थानं, औचित्यामनौचित्यं विस्मरति तदा दोषो जायते। गोस्वामिनः कथयन्ति –

**पसु पच्छी नभ जल थलचारी ।**

**भए कामबस समय बिसारी ॥**

**सिद्ध बिरक्त महामुनि जोगी ।**

**तेपि कामबस भए बियोगी ॥**

अर्थात् कामातिरेकात् पशुपक्षिरवेचर–भूचराः सर्वे कामवशा जाताः। सिद्धा विरक्ता योगिनोऽपि कामप्रभावग्रस्ता जाताः।

**१९. पतनाद् रक्षको हरिः ।**

कामानाम् अतिरेकाद् पतनं भवेत्, किन्तु कामवृत्तेः स्वात्मानं रक्षितुं केवलं प्रभुभक्तिः उपयोगिनी। यः भजनं करोति, भक्तिं करोति, तस्य कृते पतनकाले श्रीहरिः उपस्थितो भवति। समर्थजनाः अपि कामपीडिताः भवन्ति, किन्तु भक्तेषु कामो न प्रभावको भवति। अतः पतनाद् स्वात्मानं रक्षितुं भक्तिः अनिवार्या। अत साधनं कदापि न त्याज्यम्। नामस्मरणम् '**नामचरितमानसम्**' कथ्यते। प्रभुनाम्नो विशेषो महिमा। अतः कथितम् —

**बंदउँ नाम राम रघुबर को ।**

**हेतु कृसानु भानु हिमकर को ॥**

**बिधि हरि हरमय बेद प्रान सो ।**

**अगुन अनूपम गुन निधान सो ॥**

परमात्मा गुणनिधानोऽस्ति। स एव संसारकर्ता।

**२०. विदितोऽस्ति कामप्रभावः, न स्वभावः ।**

कामसूत्रविषयकं बहुभिः आचार्यैः चिन्तनं कृतम्। यदा जगद्गुरुः शङ्कराचार्यः मन्दनमिश्रेण सह शास्त्रार्थमकरोत्, तदा कामविषयकाः केचित् प्रश्ना आसन्। येषां प्रत्युत्तरं दातुं अनुभवं विना न शक्यमासीत्। अतः जगद्गुरुः परकायप्रवेशविद्यया काश्मीरस्य राज्ञः अमरुकस्य शरीरं प्राविशत्। स प्रश्नानाम् उत्तरं सम्प्राप्य पुनश्च स्वशरीरं प्राविशदिति कथ्यते, अस्मिन् देशे अनेके महापुरुषाः, धर्मपुरुषाः समुत्पन्नाः। किन्तु मनुष्यस्य कामावेगः न क्षीयते, किन्तु वर्धते। पाश्चात्यसभ्यता प्रेरिता 'टी.वी संस्कृतिः' सर्वमर्यादातटान् निमज्जयति। कामपूरेण आप्लावितं विश्वम्। अतः कथयामि यद् अस्माभिः कामस्य प्रभावो विदितः, स्वभावो न विदितः। कामस्य स्वभावः स्वात्मसमर्पणं, परिहितार्थं, स्वात्मत्यागः वर्तते।

## २१. कामसूत्रं ज्ञातुं चतुर्लक्षणानि ।

कामसूत्रं ज्ञातुं चतुर्लक्षणानि आवश्यकानि । मालुक्यपुतः (मालुक्यपुत्रः) बुद्धस्य शिष्य आसीत्। स स्वप्रश्नानां उत्तरं प्राप्तुं बुद्धस्य समीपे आगच्छत्। तेन बुद्धस्य व्यक्तित्वे चतुर्लक्षणानि दृष्टानि। कामसूत्रं ज्ञातुम् एतानि लक्षणानि आवश्यकानि ।

(१) यस्य नेत्रे विशाले, निर्मले, वासनारहिते भवेतां स जागरुकः पुरुषः । बुद्धस्य नेत्रे विशाले आस्ताम् तस्य चिन्तने सङ्कीर्णता नासीत् । तस्य दर्शने करुणा आसीत् ।

(२) यः चेतनाचेतनयोः पदार्थयोः संशयं न करोति स जागरुक पुरुषः । अहं कथयामि यत् यान् महापुरुषान् प्रति अस्माकं मनसि पूज्यभावः भवेत् , तेषां छवयः चित्राणि वा पूजाकक्षे मा स्थापयन्तु। वन्दनीयपुरुषाणां प्रतिमां हृदये धारयन्तु । यतः निन्दां कर्तुं अवसरो न स्यात् । अतः यः संशयरहितो भवेत् सः जागरुकः पुरुषः । भगवान् शिवः जागरुकः पुरुषः । यथा – **'जटा मुकुट सुरसरित लोचन नलिन बिसाल । नीलकण्ठ लावनविधि सोह बालबिधु भाल ॥'** महादेवस्य नेत्राणि विशालानि, मस्तके सुरनदी । नीलकण्ठो लावण्यनिधिरस्ति ।

(३) यस्य कण्ठस्वरः न वशीकरोति किन्तु अन्यान् मुक्तं करोति स जागरुकः पुरुषः । यः जागरुकः स्वात्मज्ञानी भवति तस्य वाण्यां तस्य मनसः शुद्धतायाः दर्शनं भवति । मुहम्मद–पयगम्बर–जिससक्राइस्ट–



कबीरादीनां शब्दः मुक्तिवर्षां करोति । मन्त्राणां ध्वनयः स्वात्मानं वशीकुर्वन्ति ।

(४) यः न दूरस्य किन्तु समीपस्थस्य वृत्तान्तं कथयति, यः प्रत्यक्षमिव सर्वं वदति तस्य कृते न किञ्चिद् दूरं भवति । मालुक्यपुत्रः मुमुक्षुः आसीत्। गौतमबुद्धः अवदत् , 'मोक्षचिन्तां त्यज, यदि कोऽपि व्याधः मृगं हन्तुं आगच्छेत् किन्तु तस्य शरः तव शरीरे लग्नः भवेत् तदा त्वं किं करिष्यसि ?' मालुक्यपुत्रः अवदत्, 'अहं शरः शरीरात् निष्कासयितुं कथयिष्यामि अपि च औषधलेपनं कर्तुं कथयिष्यामि।' इति। गौतमबुद्धः अवदत्, 'अत एव मोक्षचिन्तां त्यज। अहं तव शरीरात् तव मनसः शरं निष्कासयितुं व्यवसायं करोमि।'

अत एव यः प्रत्यक्षवस्तुनः अनुभवस्य वा कथां करोति। स एव जागरुकः। यः जागरुकः अर्थात् संयमी पुरुषः अस्ति , स एव कामसूत्रं ज्ञातुं प्रभवति । वात्स्यायनेनाऽपि संयमस्य प्रशंसा कृता । अतः एतानि चतुर्लक्षणानि कामतत्त्वं ज्ञातुं आवश्यकानि ।

## २२. गुरुर्नश्चतुरः, सुज्ञानी भवेत् ।

त्रिभुवनपितामह मम गुरुः । गुरुः एक एव भवेत्। अन्ये सर्वे मार्गदर्शकाः। मीरां स्वयमेव गुरुः , किन्तु सां सद्गुरुविषयकं सल्लापं करोति। कृष्णवियोगिनी मीरां कृष्णं प्राप्तुं स्वदशां निवेदनार्थं गुर्वाश्रयं गच्छति। मीरांयाः एकं भजनं वर्तते।

**"मैं क्यों गुरु पास जाउं ?**

**सतगुरु म्हारा चतुर सुजान, हीरा का पारखी ।**

**दिन्हा मोहे रामजी दिए बताये ।**

**संगति मारे साधकी ।"**

मीरां कथयति यत् – अहं कस्माद् गुरुसमीपं गच्छानि ? मम सद्गुरुः चतुरः सुज्ञानी च वर्तते । स हीरकं परीक्षते । तेनैव मां रामो दर्शितः । मम सङ्गतिः साधूजनानां वर्तत इति । मीरांयाः भजनं मम रोचते । गुरुः चतुरः वर्तते सुज्ञानी च । अत एव तुलसीदासः पार्वतीमुखाद् आशीर्वादान् दापयति यत् – "त्वं कीदृशो वरः प्राप्स्यसि ? यः सुन्दरः च सुज्ञानी च भवेत् ।" यथा –

**मनु जाहिं राचेउ मिलिहि सो बरु सहज सुंदर सांवरो ।**

**करुना निधान सुजान सीलु सनेहु जानत रावरो ॥**

गुरुः चतुरो न भवेत्, किन्तु सुज्ञानी भयदेव । सुज्ञानीगुरुः कथयति यत् – 'रामस्य दर्शनं भवेत् तथापि साधुसङ्गतिः न त्याज्या ।' इति । 'सहजो बाई' नाम्नी एका साधवी कथयति यद् यदि हरिप्राप्तिर्भवेत् तथापि अहं गुरुं न विस्मरिष्यामि । समाजः निन्दां कुर्यात्, किन्तु लोकलज्जा त्याज्या । लोकलज्जायाः न किमपि मूल्यम् । अत एव मीरांबाई कथयति –



**लोग कहे मीरां भई बावरी,**

**सास कहे कुलनाशी रे,**

**पग घूंघरू बांध मीरां नाची रे...।**

गुरुरेव मन्त्रः, गुरुरेव औषधम्, गुरुरेव तत्त्वम्, गुरुरेव हरिः । अत एव गुरुः अद्वितीयः ।

## २३. गुरुकुम्भकारौ समानधर्मौ ।

गुरुकुम्भकारौ समानधर्मौ । कुम्भकारवद् गुरुरपि मृत्पिण्डात् घटस्य निर्माणं करोति । यावत् पर्यन्तं मृत्पिण्डः अपक्वः तावत् पर्यन्तं स घटं प्रहरति । अपक्वघटः खण्डितो भविष्यतीति शङ्का जायते किन्तु कुम्भकारस्य एको हस्तः घटान्तर्भवति, द्वितीयो प्रहरति । एवमेव गुरुकृपायाः एको हस्तः सदैव रक्षति । गुरुरेव मार्गः, गुरुरैव मार्गदर्शकः । स एव सहयात्रिकः, स एव नाथः । यथा घटस्य शीतलं जलं तृषार्तानां तृषां शमयति तथैव गुरुरपि शिक्षयति यत्, त्वया मानवशरीरं प्राप्तं तत् परोपकारार्थं प्रयोजयेति ।

## २४. मीरां न बुद्धिगम्या, किन्तु हृदयगम्या ।

मीरांयाः सम्पर्कः बुद्ध्या कर्तुं न शक्यः, हृदयेनैव मीरां अवगम्यते । यथा वयं मन्दिरेषु परिक्रमां कुर्मः । तदा वयं मन्दिरस्य प्रतिकक्षं पश्यामः तथैव मीरांयाः सर्वाङ्गदर्शनं कर्तव्यम् । काश्मीरदेशे

लल्लेश्वरी काश्मीरस्य मीरां आसीत् । तथैव सूफीधर्मस्य राबिया अपि मीरां वर्तते । ह्यः अहं एकं ग्रामं गतवान् तदा अहम् अपश्यम् यत्, स्वश्रुवधू द्वे सहैव नृत्यतः स्म । यदा मीरां अनृत्यत् तदा तस्याः स्वश्रूः मीरांयाः भर्त्सनामकरोत् । अहं मन्ये यद् अतीते मीरां आसीत् इति न, मीरां अद्यापि वर्तते । मीरां वर्तते कस्मिन्नपि कण्ठे, कस्या अपि मर्यादायाम्, कस्यचित् नेत्रयोः, कस्मिन्नपि वेशे, कस्मिन्नपि चरणनर्तने, कस्यचित् नेत्राश्रुबिन्दुषु । अहं मन्ये यद् ''या मोक्षं प्राप्नोति, सा नास्ति मीरां, मीरां तु जने जने वर्तते, जनमानसे वर्तते, भक्तौ वर्तते ।'' गुर्जरभाषायां नरसिंहमहेताभक्तः गायति यत्, ''हरेः भक्तः मुक्तिं न याचते किन्तु स प्रतिजन्म अवतरणं वाञ्छति । यतः प्रतिदिनं नन्दकुमारस्य भक्तिर्भवेत् इति । मीरां राणामहाराजः मीरां कथयति यत्, साधुसङ्गतिं त्यक्त्वा मम समीपे उपविशतु इति । किन्तु मीरां कथयति यत् 'साधुपुरुषः मम शिरः स्वामी वर्तते । मह्यं शिरोमणिर्वर्तत इति । साधुजनेनैव रामस्य मेलनं भविष्यतीति मे आशा ।' यथा –

**साधु आया राणा मैं सुण्या, श्रवणा सुणी जी आवाज़ ।**

**साधु संगति राणी छोड द्यो, बैठो राणा के पास ।**

**साधु हमारा सिरधणी मोही, राममिलन की आस...।**



मीरांयाः जीवने सत्सङ्गतेः महद् योगदानं वर्तते । समाजः नश्वरः लोकलज्जाऽपि नश्वरा । साधुसङ्गतिः शाश्वती । साधुत्वे स्त्रीत्वं वा पुरुषत्वं न दृष्टव्यम् । मीरांयाः तेजः भक्तेः तेजो वर्तते ।

## २५. मीरां संसारसारिणी ।

मीरांयाः भजनेषु राणामहाराजेन सह तस्याः संवादाः वर्तन्ते । राणामहाराजः कथयति यद् ''भवती, साधुजनैः सह उपविश्य कुलं कलङ्कितं करोतीति । अहम् अपि कलङ्कितो भवामि । तृतीयं भवत्याः पितृगृहं मेडताराज्यं कलङ्कितं भवति । अपि च चतुर्थः चित्तोडदुर्गः कलङ्कितो भवतीति । तदा मीरां प्रत्युत्तरति –

**एक कुल तारियो राणा मैं तो, दूसरो राय राठोड** ;

**तीजो तारियो मीरां मेडतो, चोथो गढ चित्तोड ।**

**मीरां कु सद्गुरु मिलिया, सुमरन दिनाजी मोर...।** ''

मीरां कथयति यत्, अहं अस्माकं कुलस्य, राज्ञः, मेडताराज्यस्य, चित्तोडदुर्गस्य इत्थं चतुर्णां वस्तूनां तारिणी । वस्तुतः मीरां संसारतारिणी साध्वी वर्तते । मीरांयाः स्मरणं पुण्यदायकं वर्तते ।

## २६. मीरांया रोगो वियोगः ।

कृष्णविरहे मीरां रात्रिदिवं विरहवेदनाम् अनुभवति । वियोगस्य मधुरां पीडां भरतोऽपि अनुभवति । विरहरोगस्य नास्त्यौषधम् । मीरां कथयति यत् 'मम रोगस्य शमनं कृष्णवैद्येनैव भवेत् ।' मीरां कृष्णविरहाग्नितप्ता भूत्वा सुवर्णतां गच्छति ।"

## २७. अनन्यभक्तिमयी मीरां ।

यथा पार्वती शिवस्य भक्तिं करोति, तथैव मीरांयाः जीवनेऽपि पार्वतीवन भक्त्याः अनन्यता दृश्यते । मीरां बाल्यकाले विवाहिता भूत्वा मेवाडं अजगाम तस्याः पतिः भोजराजः सज्जनः आसीत्, किन्तु विक्रमादित्यः मीरां अतीव तर्जयामास भोजराजः अल्पायुरासीत् । स शीघ्रमेव दिवं प्रतस्थे । दुर्भाग्यवशान् मीरां विधवा जाता । मीरांयाः श्वश्रूः आसीत्, सा मीरां गौरीपूजनं कर्तुमादिदेश । किन्तु मीरां बभाषे यत् — कृष्ण एव मम देवः । कृष्ण एव मम देवी । मम बुद्धिं व्यभिचारिणीं मा करोतु ।' इति । मीरांयाः सर्वे सम्बन्धिनः आसन् किन्तु मीरांयाः सम्बन्धः सर्वैः सह नासीत् । तस्याः चिरसम्बन्धः यथा मीरां कथयति -

**तू जनम-जनम का साथी,**

**थारे नहीं बिसरुं दिनराती ।**

मीरां कृष्णमेव स्वसहचरं अमन्यत ।



## २८. मौनम् उत्तमा वाक् ।

महाभारते विदुरनीतौ धृतराष्ट्रः पृच्छति यत् — 'कोऽस्ति उत्तमा वाक् ?' तदा विदुरः प्रत्युत्तरति - "हे राजन् ! मौनम् उत्तमावाक् । महाभारते चतुर्विधा वाक् वर्तते । मौनं तु उत्तमावाक् । यदा वचनस्य आवश्यकता भवेत् तदा सत्यमेव ब्रूयात् । अत्यन्तावश्यकता भवेत् तदैव लोककल्याणाय वक्तव्यम् । तृतीयावाणी सत्यवाणी, मधुरा वाणी । न ब्रूयात् कटुसत्यम् । अत एव भगवान् मनुः कथयति, "सत्यं ब्रूयात् प्रियं ब्रूयात् ।" केचित् कथयन्ति यद् वयं सत्यं वदामः अत एव कटुभाषिणः स्मः । नहि, नहि कस्माद् अमृतस्य विषे परिवर्तनं कुरुथ ? चतुर्थवाक् धर्मसङ्गतावाक् वर्तते । या वाणी धर्मसङ्गता नास्ति, सा न वक्तव्या ।

## २९. धर्मः पुष्ट्यै, नाशक्तये ।

एका भगिनी मां पत्रं प्रेषितवती । सा कथयति यत्, तस्याः श्वश्रूः तां नवदिवसपर्यन्तं रामकथाकाले उपवासान् कर्तुमादिशति । सा लिखति यत् - उपवासान् मम दुर्बलशरीरेण दुग्धाभाववशात् मम शिशुं दुग्धं पाययितुं मे शक्तिर्नासीत् । अहं कथयामि यत् उपवासं कर्तुं नास्त्यावश्यकता । अन्नं तु स्वयमेव ब्रह्म । सम्यग् भोजनमेव उपवासोऽस्ति । धर्मः युष्माकं पुष्ट्यै भवति । यो धर्मो युष्मान् अशक्तान् करोति स नास्ति धर्मः । उपनिषत् कथयति - "नायमात्मा बलहीनेन लभ्यः ।" बलवति शरीरे बलवान् आत्मा वसति । शरीरं धर्मसाधनं वर्तते । अतः धर्मेण पुष्टा भवन्तु, नाशक्ताः ।

**३०. चेतकचितोडमीराँरूपा त्रिविधा चेतना ।**

चेतकः महाराजस्य प्रतापस्य अश्वः । अयम् अश्वः स्वप्राणान् त्यक्त्वा स्वामिनम् अरक्षत् । चितोडदुर्गः स्वगौरवस्य प्रतीकम् । मीरां अध्यात्ममार्गस्य यात्रिका । सा भक्तिमार्गस्य देहत्यागिनी, सा कृष्णप्रेम्णि सा त्यक्तप्राणा, सा कृष्णप्रणये त्यक्तजीविता – इत्थं चेतकचितोडमीरांरूपा चेतना भक्तिमार्गे समर्पणं सूचयति । मीरां कथयति –

**मैं तो गिरधर के घर जाउं ।**

**गिरधर म्हारो साचो प्रीतम, देखत ही रीझाउं ।**

अस्माकं चेतना यदा दृढसङ्कल्पा समर्पणमयी भवति, यदा प्रियार्थं प्राणान् त्यक्तुं समर्था भवति तदा भक्तियोगः सिध्यति ।

चितोडदुर्गः अर्थात् चित्तवृत्तिनिरोधः, चेतकः मनसः चाञ्चल्यम् । मीरां चाञ्चल्यस्थैर्ययोः सेतुबन्धः ।

**३१. सत्सङ्गतौ लोकप्रतिष्ठात्यागः ।**

लोकसम्पर्कः अर्थात् जनसम्पर्कः । लोकेन सह 'शोक' शब्दः सम्बद्धः । लोकसम्पर्कः शोकं ददाति । यदा लोका निन्दन्ति तदा वयं शोकविक्षिप्ताः भवामः । यदा साधुसङ्गतिः भवति तदा लोकलज्जा, लोकमर्यादा, सर्वमपि गच्छति । तुलसीदासः लोकप्रतिष्ठां वह्निं मन्यते ।



यदा सत्सङ्गतौ मनो रमते तदा लोकस्य स्नेहबन्धनं विगलति मीरां कथयति –

**अब तो मेरा रामनाम, दूसरा न कोई ।**

**माता छोडी, पिता छोडे, छोडा सगा भाई ।।**

मया ग्रामेषु दृष्टं यत् , जनाः चुल्लीकाष्ठानि रज्ज्वा बध्नन्ति । किन्तु यदा रज्जुबन्धनं न शिथिलीभवति तदा केवलं द्वौ मार्गौ स्तः । रज्जुं ज्वालय अथवा कर्तर्या छिन्धि । सत्सङ्गतौ ग्रन्थिच्छेदः अथवा ग्रन्थिदाहः कर्तव्यः । अत एव मीरां कथयति –

**अब तो मेरा रामनाम दूसरा न कोई ।**

**संत देख दौड आई, जगत देख रोई ।।**

**प्रेम आंसू डार डार, अमर बेल बोई ।**

**अब तो मेरा रामनाम दूसरा न कोई ।।**

मीरां सत्सङ्गतिं स्वीकृत्य लोकप्रतिष्ठां विजहाति । अत एव सा विश्वं दृष्ट्वा रोदिति । साधुजनान् वीक्ष्य धावति । सा अश्रुभिः प्रेम्णवल्लीं सिञ्चति । मीरांयाः परिमलः भक्तेः सौरभं वर्तते ।

रामचरितमानसमपि करुणरसप्रधानं वर्तते । तुलसीदासेन अश्रुषु लेखनीं निधाय करुणामयं काव्यं लिखितम् ।

## ३२. यत्र रामपारायणं तत्र नवरात्री ।

## ( २५-०९-२०१४ तः ०३-१०-२०१४ पर्यन्तं छत्तीसगढस्थाने दुर्गप्रदेशे ''मानस-दुर्गा'' इत्याख्या कथा )

आश्विनमासस्य नवरात्रिकाले छत्तीसगढे दुर्गनगरे रामकथायाः प्रारम्भो भवति । नवरात्रीपर्व दुर्गायाः पावनं पर्व । शिवस्य आराधना शिवरात्रौ भवति तथैव जन्माष्टमीदिने कृष्णाराधनं भवति, किन्तु मनिषीभिः मातृपूजायाः महिमा विशेषरूपेण स्वीकृतः । अत एव नवदुर्गाणाम् उपासना नवरात्रीषु भवति । यत्र यत्र रामचरितमानसस्य पारायणं भवति तत्र तत्र नवरात्रिर्वर्तते इति मे मतिः । रामचरितमानसे नवत्यधिक द्विशतवारं 'दुर्गा' शब्दस्य प्रयोगो जातः । तुलसीदासेन गिरिराजकिशोरी 'दक्षकुमारी', 'उमा', 'अम्बिका', 'भवानी', 'गौरी', 'पार्वती' इत्यादिभिः विविधैः शब्दैः देवीवन्दना कृता । अहं दुर्गापूजाकाले पारायणेन दुर्गायाः वाङ्मयीं पूजां करोमि । वस्तुतः अस्माकं भाषा वाङ्मयी पूजा अस्ति । अत एव मातृकाभिः या वाणी निष्पद्यते सा देव्याः वाङ्मयीपूजा वर्तते ।

## ३३. दुर्गा रामायणस्य प्रथमा श्रोत्री ।

रामकथा स्वयमेव दुर्गास्वरूपा । रामकथा स्वयमेव अम्बा, जगदम्बा, कालिका । सैव रामकथायाः प्रथमा श्रोत्री । सा अनादिनिधना प्रथमा श्रोत्री, यया शङ्करमुखाद् इयं कथा श्रुता । यथा रामचरितमानसे



वर्णितं तथा दुर्गां विना दुर्गायाः स्मरणं विना कथाश्रवणं न शक्यम् । अत एव गोस्वामिभिः कथितम् —

**''भवानीशङ्करौ वन्दे श्रद्धाविश्वासरूपिणौ । याभ्यां विना न पश्यति सिद्धाः स्वान्तःस्थमीश्वरम् ।''**

दुर्गैव भवानी सैव सरस्वती, सैव लक्ष्मीः । सर्वाणि शास्त्राणि शिवमुखात् निर्गतानि पार्वत्या श्रुतानि । कदाचित् पार्वत्याः मुखात् निर्गतानि, शिवेन श्रुतानि । तथैव रामकथाऽपि शिवेन कथिता, दुर्गया श्रुता ।

## ३४. श्रद्धा त्रिधा ।

तुलसीदासानुसारं भगवान् शिवः विश्वासरूपः, पार्वती श्रद्धारूपा किन्तु यथा भगवद्गीता वदति तथा श्रद्धा त्रिविधा वर्तते । गोस्वामिनः कथयन्ति यत् —

**सात्त्विक श्रद्धा धेनु सुहाई ।**

**जौं हरि कृपाँ हृदयं बस आई ॥**

सात्त्विकी श्रद्धा भवानी वर्तते, सैव राजसी श्रद्धा, तामसी श्रद्धा । (यदा दक्षकन्या साभिमानं रामस्य परमार्थस्वरूपम् अज्ञात्वा तस्य परीक्षां कर्तुं गच्छति यदा पत्युर्वचनं न स्वीकुरुते, यदा सीतायाः रूपं गृहीत्वा रामं पुरतः तिष्ठति तदा भवानी राजसी श्रद्धा रूपा । यदा सा

रामस्वरूपं न जानाति तदा सैव व्यामोहरूपा तामसी श्रद्धा । पुनरपि पार्वतीरूपा प्रसन्ना जगन्माता सात्त्विकी श्रद्धा वर्तते ।)

श्रद्धाविषये गुर्जिऐफः त्रीणिवाक्यानि वदति । गुर्जिएफः रशियादेशस्य दार्शनिकः । गुर्जिएफः कथयति यत् सचेतना श्रद्धा मुक्तिरस्ति, सा जागरिता श्रद्धा, सा सावधाना श्रद्धा, नैव अन्धश्रद्धा । निरन्तरजागरिता सावधाना श्रद्धा मुक्तिरूपा । सा पुनरपि कथयति, 'यदा श्रद्धा वर्धते, क्षीयते, न्यूना भवति, वृद्धिं गच्छति सा श्रद्धा दास्यरूपा । सा मनुष्यं बध्नाति ।' गुर्जिएफः कथयति यत् 'यदा भीता श्रद्धा वर्तते तदा सा मूढता । भयवशात् वयं कमपि नमामः, किञ्चिदपि कुर्मः तदा सा हृदयस्य क्लैब्यम् । सा भीता श्रद्धा । सा मनुष्यं मूढं करोति ।'

अत एव अहं मन्ये यत् श्रद्धा गुणातीता भवेत् । भवानी गुणातीता श्रद्धा । अत एव विशेषणरहिता ।

## ३५. इष्टा पञ्चायतनपूजा ।

वयं पञ्चायतनपूजां कुर्मः । सैव इष्टा । तत्र किञ्चिद् रहस्यमस्ति । वयं गणेश-सूर्य-विष्णु-शिव-दुर्गाः इति पञ्चदेवानां पूजां कुर्मः । गणेशः अर्थाद् विवेकः । यः कोऽपि यौवने विवेकं धारयति, तस्य गृहे प्रतिदिनं गणेशचतुर्थी वर्तते । सूर्यवन्दना शुभसङ्कल्पस्य उपासना । सूर्यनमस्कारो व्यायामोऽपि भवेत् । किन्तु सूर्यनमस्कारस्य आध्यात्मिकं महत्त्वम् । वयं प्रकाशेन जीवेम - जीविष्याम इति शुभसङ्कल्प एव सूर्याराधनाऽस्ति ।



तमसो मा ज्योतिर्गमय इति अस्माकं प्रार्थना । विष्णुः अर्थात् व्यापकः विशालः । अस्माकं दृष्टिः व्यापका भवेत्, अस्माकं दृष्टिकोणो विशालो भवेत् तत्र सङ्कीर्णता न भवेत् । सैव विष्णोः आराधना । शिवः अर्थात् विश्वकल्याणम् । यदि वयं अन्येषां कल्याणस्य विचारं कुर्मः, तर्हि प्रतिदिनं रुद्राभिषेकः । शिवः कल्याणस्य पर्यायः । वयं "सर्वे भवन्तु सुखिनः ।" इति प्रार्थनां कुर्मः । यदि अस्माकं श्रद्धा त्रिगुणातीता भवेत् तर्हि प्रतिदिनं दुर्गापूजा वर्तते ।

## ३६. हनुमान् प्राणतत्त्वस्य आराधना ।

गोस्वामिभिः तुलसीदासैः तदनन्तरं गुरुर्वन्दना कृता । गुरोश्चरणरजसा नेत्रे पवित्रे कृत्वा दृष्टिविवेकं प्राप्य तुलसीदासः रामचरितमानसं लिखति । तुलसीदासैः हनुमतः प्रार्थना कृता, यथा –

**महाबीर बिनवउँ हनुमाना ।**

**राम जासु जस आप बखाना ॥**

**प्रवनउँ पवनकुमार खल बन पावक ग्यान घन ।**

**जासु हृदय आगार बसहिं राम सर चाप धर ॥**

भगवान् हनुमान् अस्माकं प्राणतत्त्वं वर्तते । प्राणतत्त्वं हनुमद्वत् सर्वेषां हितकारकम् । हनुमान् मंगलमूर्तिः वर्तते । अतो हनुमत्स्थापना अर्थात् गणेशस्थापना । रामभद्रोऽपि मङ्गलमूर्तिः गणेशहनुमन्तौ राममन्दिरे

समानन्तरे रामस्य निकटे विराजेते। द्वाभ्यां मोदकप्रियः, द्वौ विघ्नहर्तारौ-मङ्गलकर्तारौ वर्तेते। हनुमदुपासनया बलबुद्धिविद्यानां प्राप्तिः क्लेशविकाराणां शमनं च भवति।

**३७. द्वापञ्चाशदधिकं तत्त्वं दुर्गा।**

मातृकायाः द्विपञ्चाशद् वर्णाः सन्ति। शक्तिपीठान्यपि द्वापञ्चाशत् सङ्ख्यकानि। सैव दुर्गा, सैव परमतत्त्वम्। त्रिपञ्चाशतमं शक्तिपीठम् आत्मतत्त्वम्, तदेव वयम्। तत् शक्तिपीठं नाम्ना-जपेन-ध्यानेन-कीर्तनेन-नामस्मरणेन जागरितं कर्तव्यम्। दुर्गा अर्थात् श्रद्धा। सैव परमस्य समीपं नयति।

**३८. परमप्राप्त्यै नैका मार्गाः।**

रामलक्ष्मणाभ्यां सन्ध्याकाले विश्वामित्रः मिथिलादर्शनार्थं गच्छति, तदा स कथयति - "गच्छेताम् भवन्तौ नगरं च सर्वेषां नेत्राणि साफल्यतां नयतामिति।" यत् परमतत्त्वं वर्तते, तज्जानाति, यत् को जनः केन मार्गेण आत्मतत्त्वं प्राप्नुयादिति। कोऽपि मुखदर्शनेन, कोऽपि हस्तस्पर्शेण, कोऽपि चरणमार्गेण परमं पदं प्राप्नोति।

भवन्तः सामूहिकसाधनया स्वलक्ष्यं निर्धारितं कुर्वन्तु। यदि कोऽपि बुद्धपुरुषः प्राप्यते तर्हि लक्ष्यं प्राप्यते शीघ्रम्। अन्यथा धैर्यं धृत्वा बुद्धपुरुषार्थं प्रतीक्षां कुर्वन्तु। कस्यचित् हस्तः, कस्यचित् श्वासः, कस्यचित् स्वरः, कस्यचित् नाम - एते सर्वे मार्गाः साधुपुरुषस्य शब्दोऽपि मार्गो भवेत्। जनको वदति यत् —

**इन्हहि बिलोकत अति अनुरागा।**

**बरबस ब्रह्मसुखहि मन त्यागा।**

**सहज बिरागरूप मन मोरा।**

**भये थकित जिमि चंद चकोरा॥**

रामचन्द्रस्य मुखं दृष्ट्वा जनकमहाराजः ब्रह्मसुखं त्यजति। रामचन्द्रस्य मुखं स अनिमेषं पश्यति। अत एव कथयामि यत् — सिद्धानां मौनमपि मार्गो भवति। [गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः।...भिद्यते हृदयग्रन्थिः....] कदाचित् बुद्धपुरुषस्य नेत्राश्रुबिन्दुरपि मार्गो भवति। इत्थम् आत्मा यदा जागरितो भवति तदा कोऽपि मार्गः प्राप्यते।

**३९. श्रद्धया सत्यसिद्धिः।**

तुलसीदासः कथयति यत् - "**भवानीशङ्करौ वन्दे श्रद्धाविश्वासरूपिणौ। याभ्यां विना न पश्यन्ति सिद्धाः स्वान्तःस्थमीश्वरम्॥**"

यदि स्वात्मनः श्रद्धा भवेत् तदा सर्वमपि सिद्ध्यति । श्रद्धया मिथ्यात्वमपि सत्यं भवति । यदि श्रद्धा मौलिकी भवेत्, स्वात्मनो भवेत्, तदा सत्यमपि स्वयं सिद्धं भवति । अन्धश्रद्धा वा भीतिपूर्णा श्रद्धा अस्मान् न कुत्रापि नयति, श्रद्धा तु महामाया पार्वती शैलपुत्री जगदम्बा वर्तते । अतः प्रातःकाले श्रद्धा बोद्धव्या ।

**( श्रद्धां प्रातर्हवामहे श्रद्धां माध्यंदिनं परि । श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥ ऋग्वेद-१०-१५१-५ )**

यदा श्रद्धा जागरिता भवेत् तदा प्रातःकाले – मध्याह्ने–अस्माकं जीवनस्य मध्याह्ने–अस्माकं श्रद्धायाः विश्वासपूर्वकं लोकमङ्गलाय विनियोगः कर्तव्यः । प्रथमम् अस्माकं जागर्तिः भवेत् । अनन्तरं समाजस्य जागर्तिः भवेत् । स्वात्मकल्याणं न सिद्ध्यति विना श्राद्धम् ।

## ४०. नानाविधानि तपांसि ।

रामचरितमानसे भगवत्याः उमायाः तपसो वर्णनमस्ति । ब्रह्मचारिणी उमा तपस्तप्त्वा शिवमाराधयितुं प्रयतते । तुलसीदासैः तपो महिमागीतः । देशकालानुसारं नानाविधानि तपांसि क्रियन्ते । तपसः परिभाषा परिवर्तता । कोऽपि कृषीवलः क्षेत्रे श्रमं कृत्वा शस्युत्पादनं करोति, तदपि तपः । वैज्ञानिकः अहर्निशं श्रमं विस्मृत्य प्रयोगान् करोति तदपि तपः वयं गृहं निर्मलं कर्तुं, मार्गान् स्वच्छान् कर्तुं, राष्ट्रं निर्मलं कर्तुम् उद्यागं कुर्मः, तदपि आधुनिकं तपः ।



## ४१. भगच्छवेर्देवमन्दिरे स्थापना सरला चित्ते कठिना ।

रामचरितमानसं चित्तविषयकं निरूपणं करोति । चित्तं निर्मलं कर्तुं दुष्करम् । कृष्णमूर्तिः कथयति यद्, यदा वयं ग्रामान्तरं गच्छामः तदा प्रवासात् पूर्वं मञ्जूषां वस्त्राणि निधाय गच्छामः । प्रवासमञ्जूषायां यद् वस्त्रं सर्वप्रथमं निवेशितं तत् वस्त्रं सर्वान्तिमं निःसरति । यानि वस्त्राणि उपरि, अन्तिमे काले निक्षिप्तानि तानि प्रथमं प्राप्यन्ते इत्थं चित्ते ये अन्तिमा संस्काराः ते सर्वप्रथमं निस्सरन्ति । किन्तु जन्मान्तराणां संस्काराः विलम्बेन निर्गच्छन्ति । अत एव अहं कथयामि यद्, बुद्धपुरुषस्य छविः मन्दिरे न स्थापितव्या किन्तु चित्ते स्थापितव्या । भगवच्छवेः स्थापना चित्ते कुरु, न मन्दिरे । इष्टदेवो बुद्धपुरुषो वा भवान् यत्र यत्र गच्छति तत्र तत्र साक्षीरूपेण आगमिष्यति ।

## ४२. आचार्यो दोषी शिष्यदोषेण ।

[कालिदासो यथा कथयति– 'आचार्यमागच्छति शिष्यदोषः । (मालविका) तथैव मुरारिबापुमहाभागा अपि मन्यन्ते ।']

वयं यत् किञ्चित् कर्म कुर्मः तस्य फलं वयं लभामहे, किन्तु यदा प्रजा अपराधं करोति तदा तस्य फलं राजा भुङ्क्ते । यतो राजा प्रजायाः निर्माणं करोति । अतः प्रजाजनः अपराध्यति तदा राजा दण्डभाग् भवति । राज्ञः अपराधस्य दण्डं पुरोहितः प्राप्नोति इयं चाणक्यनीतिः । यदि पत्नी पापं करोति तदा तस्याः पतिर्दण्डनीयो भवति । अस्माकं

परम्परासु विवाहकाले कन्यायाः हस्तः पुरुषस्य हस्ते समर्प्यते । पत्नी पुरुषम् अनुसरति । अतः पत्न्याः अपराधस्य फलं पतिः भुङ्क्ते । शिष्यः पापं करोति तदा तस्य गुरुः दण्डं भुङ्क्ते । कागभुशुण्डिः महाकालमन्दिरे स्खलनमकरोत्, अपराधमकरोत् तदा तस्य गुरो दण्डापराधं भोक्तुं सन्नसद्धोऽभवत् । स अवदत् "हे भोलेनाथ ! हे सदाशिव ! मम शिष्यः मदाश्रितः अतः भवान् कोपं न करोतु । अहं दण्डापराधं सोढुं सन्नद्ध इति । इत्थं शिष्यापराधस्य फलं गुरुः भुङ्क्ते ।

**४३. स्मरणे तेऽधिकारः, न मरणे ।**

कथाश्रवणोत्तरं मरणस्य चिन्तनं मा कुरु, मरणम् अस्माकम् अधिकारे न वर्तते । ऋषिर्वशिष्ठः भरतं कथयति- "**हानि-लाभ, जीवन-मरण जस-अपजस बिधि हाथ ।**" अर्थात् लाभालाभौ जीवनमरणे, यशः, अपयशश्च अस्माकं अधिकारे न वर्तन्ते । एतत् सर्वं विधातुः हस्ते वर्तते । अत एव विधातारं कथयतु – "हे परमात्मन् ! मरणं ते हस्ते वर्तते । मरणे तेऽधिकारः किन्तु अहं तव स्मरणं दिवानिशं करिष्यामि । स्मरणे मेऽधिकारः । यदा अहम् इच्छामि, तदा तदा त्वां स्मरामि, त्वामेव स्मरिष्यामि । मया स्वीकृतं यल्लाभालाभौ ते हस्ते वर्तेते, किन्तु अहं नैराश्यं नैवानुभविष्यामि, एतन् मे हस्ते वर्तते । अहं पुनः शिक्षयितुमिच्छामि यत्, कामं, लाभ ईश्वरस्य हस्ते वर्तते, परन्तु यदा लाभप्राप्तिः भवेत् तदा अहं सर्वेषु विभज्य खादिष्यामि ।" इति मे प्रतिज्ञा । गुर्जरकविः मरिझः कथयति –

**बस एटली समज मने परवरदिगार दे ।**

**सुख ज्यारे मले त्यारे बधाना विचार दे ॥**

(परमात्मा मह्यम् ईदृशीं मतिं ददातु यद् यदा सुखप्राप्तिः भवेत् तदा सर्वेषां हितस्य विचारमपि प्रयच्छेत् । मया यस्य यत्किञ्चिद् ऋणं गृहीतं तत् सर्वं दातुं ईश्वरो मे शक्तिं दद्यात् ।)

अत एव यदि प्रारब्धवशात् यशः प्राप्तिर्भविष्यति तदा अहं विभज्य स्वीकरिष्यामि अपि च यदि अपकीर्तेः प्राप्तिर्भविष्यति तदा विना नैराश्यं भोक्ष्यामि ।

**४४. मन्त्रः सविश्वासं जाप्यः ।**

तुलसीदासेन सीतारामयोः वन्दनां कृत्वा नामस्मरणस्य वन्दना कृता । कलियुगे नामस्मरणमेव आधारः, सर्वशास्त्राणां सारो हरिनाम । भवान् रामं कथयतु, प्रेम कथयतु, कृष्णं कथयतु, शिवं जपतु, अल्लाहं जपतु वा बुद्धनाम्नः जपं करोतु । भगवान् शिवः वाराणस्यां रामनाम जपति अपि च काश्यां मुक्तिमुपदिशति । भगवान् शिवः विषपानकाले "रामनाम" उवाच तदा विषं रामेण सह मिश्रीभूय आनन्दविश्रामस्थानं जातम् । रामनाम्ना मानवमयं दण्डकारण्यं धन्यं जातम् । तुलसीदासः कथयति यन् मम कृते 'रामनाम' अपि च गङ्गाजलं च पर्यायः । भावेन, अभावेन आलस्येन, रोषेण, प्रभुनामसङ्कीर्तनेन दशदिशः मङ्गलमयाः भवन्ति । पृथ्वी बीजमयी, आकाशः नक्षत्रमयः तथैव

'रामनाम' सर्वधर्ममयं वर्तते। यस्य यस्य यस्मिन् यस्मिन् नाम्नि रुचिः भवेत्, तस्य तस्य नाम्नः सङ्कीर्तनं करोतु। मन्त्रस्य जपः सविश्वासं कर्तव्यः। तुलसीदासेन लिखितम् —

**मंत्र जाप मम दृढविश्वासः।**

**पंचम भजन सो वेद प्रकासा ॥**

(अर्थात् मन्त्रजपे मम दृढविश्वासः भजनं अर्थात् प्रभुभक्तिः पञ्चमः वेदः। इति मे मतिः।)

**४५. रामकथा चन्द्रकिरणशीतला।**

उपनिषत्सु परमेश्वरस्य ब्रह्मरूपं वर्णितम्। ब्रह्म कठोरादपि कठोरं, वज्रादपि कठोरं, पुष्पादपि कोमलं वर्तते। गोस्वामिभिः रामकथा कालिकाकरालां कथयित्वा शीघ्रमेव कथितं यद् —

**रामकथा ससि किरन समाना।**

**संत चकोर करहिं जेहि पाना ॥**

रामकथा चन्द्रकिरणकोमला शीतला च वर्तते। चन्द्रमाः अस्माकं मनः, किन्तु चन्द्रमाः दूरे वर्तते। मनः शीतलं भवेत्, किन्तु मनः कस्माद् उग्रं भवति ? क्षणे क्षणे मनुष्यः क्रोधवशीभूतो भवति। चन्द्रः रामनामजपः वर्तते इति मे मतिः। यः कोऽपि राममहामन्त्रजपं करोति, तस्य मनः





शीतलं भवति। वयं चन्द्रं ग्रहीतुं न प्रभवामः। रामः चन्द्रवद् दूरे वर्तते किन्तु यथा चन्द्रकिरणाः गृहं प्रविशन्ति, अस्मान् स्पृशन्ति किन्तु चन्द्रकिरणप्रवेशार्थं द्वारे अपिहिते भवेताम्। रामनामजपात् चित्तप्रसन्नता।

**४६. सृष्टिः परस्परविरोधिधर्ममेलनम्।**

सृष्टिः परस्परविरोधिधर्मैः व्याप्ताः वर्तते। अत्र न कोऽपि सज्जनः, न कोऽपि दुर्जनः। यदा चित्तं यथाग्रस्तं भवति तदा अध्यात्मयात्रा न शक्या।

कैकेयी स्वभावतः साध्वी आसीत्, किन्तु तस्या मनसि रामं प्रति द्वेषो जागरितः। गोस्वामिनः लिखन्ति यद् —

**बिपति बीजु बरसा रितु चेरी।**

**भुई भई कुमति कैकेयी केरी ॥**

कैकेय्याः बुद्धिः भूमिः, तस्यां विपत्तिबीजं पतितम्। मन्थरया द्वेषवर्षाः कृताः। अतः रामद्वेषो बुद्धो प्ररूढः।

भवान्या नैकानि रूपाणि। सा यदा चण्डिका भवति तदा दुष्टानां शमनार्थं कालिका भवति। किन्तु मातृरूपा सा वात्सल्यमयी वर्तते। सैव जगन्माता जगद्धात्री।

## ४७. उमा परमेश्वरी जगदम्बा ।

रामचरितमानसे दुर्गायाः प्रथमा प्रतिष्ठा वर्तते । उमायाः चरित्रं सुन्दरम् । गोस्वामिनः कथयन्ति –

**उमा चरित सुंदर मैं गावा ।**

**सुनहु संभु कर चरित सुहावा ।**

उमैव अम्बिका, भवानि । अत एव एकदा राम उवाच यद्, 'अहं पृथ्वीं राक्षसहीनां करिष्यामीति ।' तदा सीता प्रश्नं चकार – 'महाराज ! यदा भवान् असुरनाशसङ्कल्पं कृतवान् तदा कस्मान् मां नापृच्छत् ?' रामः प्रत्युत्तरं न ददौ तदा जानकी उवाच, भवता प्रतिज्ञा कृता किन्तु राक्षसा अपि मम बालकाः । भवान् वस्तुतः तेषां दुर्वृत्तं हन्तुम् इच्छति किन्तु अहं तेषामपि माता । रावणो मां व्यस्मरत्, किन्तु भवान् यदा तं हन्तुं शरसन्धानं करिष्यति तदा तस्मिन्नपि मां द्रक्ष्यति । तस्मिन् क्षणे भवान् तस्य वधं कर्तुं कथं शक्ष्यति ?'' (रावणमतिभ्रष्टो भवेद् तदैव सा जगदम्बां विस्मरेदिति विचार्य जगदम्बा रावणस्य मनसि कामभावं निक्षिप्तवती । अत एव सीतायाः जगज्जननीरूपं विस्मृत्य रावणः तां प्राप्तुं दुर्मतिं चकार ।)

## ४८. अभयदो धर्मः ।

यदा भगवान् रामः शक्तिपूजां कर्तुं निश्चयं कृतवान् तदा प्रतिदिनं निश्चितसङ्ख्यकैः कमलपुष्पैः प्रतिदिनं पूजां कर्तुं स व्रतम् अगृह्णात् ।





लक्ष्मणहनुमन्तौ कमलपुष्पाणि आनयताम् । किन्तु अन्तिमे दिवसे पूजायाम् एकं कमलं न्यूनं वीक्ष्य श्रीरामः शरेण स्वनेत्रं बहिर्निष्कास्य देव्यै समर्पयितुं निश्चयमकरोत् ।

शक्तिपीठेषु जगदम्बिकायाः नानारूपाणि राजन्ते । तत्र प्राणिवधो भवति तद् अयोग्यम् । केचिद् वदन्ति यद् यदि वयं बलिं न दास्यामः तदा माता रुष्टा भविष्यतीति । अहं तादृशान् लोकान् अकथयम्, यद् – ''यदि माता रुष्टा भविष्यति तदा सर्वं पापं अहं स्वीकरिष्यामि ।

सर्वाणि कष्टानि सोढुं स्थिरनिश्चयोऽहम् । यदि भवन्तः कस्यापि अजस्य वा कुक्कुटस्य वा अन्यस्य प्राणिनः मस्तकं देव्यैः समर्पयितुम् इच्छथ तर्हि युष्माकम् अहङ्कारं समर्पयन्तु । वस्तुतः अभयदो धर्मः । धर्मः अभयं ददाति । यस्मान् मनुष्यो बिभेति असौ न धर्मः । विनयपत्रिकायां गोस्वामिनः कथयन्ति –

**प्रेम-बारि-तरपन भलो, घृत सहज सनेहु ।**

**संसय- समिध, अगिनि घमा, ममता-बलि देहु ॥**

**बीर महा अवराधिये, साधे सिधि होय ।**

**सकल काम पूरन करै, जानै सब कोय ॥**

प्रेमजलेन तर्पणं करोतु । स्नेहेन यज्ञं करोतु । संशयसमिद्भिः अग्निं प्रज्वालयतु । क्षमां वह्निस्थाने स्थापयतु । ममत्वस्य अहङ्कारस्य बलिं

ददातु । इयमेव यथार्था पूजा । सात्त्विकभावेन पूजां कुर्वन्तु ।

## ४९. शस्त्रत्यागे रक्षका देवाः ।

दुर्गा अष्टभुजा वर्तते । दुर्गायाः हस्तेषु नानाविधानि शस्त्राणि सन्ति । विजयादशम्यां सर्वे शस्त्रपूजां कुर्वन्ति किन्तु शस्त्रपूजायाः स्थाने शास्त्रपूजा कर्तव्या । अस्माकं देव्यो देवाश्च अस्माकं रक्षार्थं नानाविधानि अस्त्रशस्त्राणि धारयन्ति, अतः अस्माभिः शस्त्रत्यागः कर्तव्यः । यदि वयं शस्त्रं धारयिष्यामः तदा देवा विचारयिष्यन्ति यद् अस्मासु मनुष्याणां नास्ति विश्वासः इति । यस्य रक्षां स्वयमेव देवाः कुर्वन्ति तस्य कृते शस्त्रं निरर्थकम् ।

मया मम 'तलगाजरडा' इति नाम्नि ग्रामे प्रयोगः कृतः । तत्र राममन्दिरे रामलक्ष्मणयोः समीपे शस्त्राणि न सन्ति । यदा रामः लङ्काविजयं कृत्वा अजगाम तदा रामः वशिष्ठचरणयोर्दण्डवत् प्रणामं कर्तुं भूमौ निपपात । रामः स्वशस्त्रं त्यक्त्वा वशिष्ठं ननाम । अतः मम मनसि जातं यद् शास्त्रवेत्तुः कृते बुद्धपुरुषस्य चरणं गृहीत्वा, शस्त्रस्य न प्रयोजनम् इति । यदा सङ्कीर्णता प्रविशति तदा शास्त्रमपि शस्त्रं भवति । अतः विना विचारं शास्त्रानुसरणम् अपि न कर्तव्यम् । कामं देव्यः स्वहस्तेषु शस्त्राणि धारयन्ति किन्तु तासां मातृरूपं भिन्नं मनोहारि च वर्तते ।



## ५०. रामचरितमानसे विश्वसप्ताश्चर्याणि ॥

रामचरितमानसे विश्वस्य सप्ताश्चर्याणि सन्तीति मे मतिः । एतानि आश्चर्याणि न दुर्लभानि अपि **तु** सुलभान्येव । वस्तुतः रामायणस्य सप्तकाण्डस्थाश्चोपाई-पङ्क्तय एव सप्ताश्चर्याणि सन्ति, यासु नूतनानि रहस्यानि दृश्यन्ते प्रतिदिनम् । यथा बालकाण्डे प्रथममाश्चर्यं दृश्यते -

**सीयराममय सब जग जानी ।**

**करउँ प्रणाम जोरि जुग पानी ॥**

एतत् पङ्क्तिद्वयं पठित्वा मनसि दृढनिश्चयो भवति यत् ममकृते सर्वमपि वन्दनीयमस्ति, सर्वमपि राममयं वर्तते । नरसिंहमहेता इत्याख्यो गुर्जरकविः कथयति यत् समग्रे जगति सर्वस्मै प्रणमति हरिभक्त इति । किन्तु वक्तुमिदं सुकरमस्ति । यदि एष विश्वासः जीवितः स्थापितो भवेत् तर्हि नैतरद् अधिकमाश्चर्यमवशिष्येत जीविते । समग्रं विश्वं ब्रह्ममयं भवेत्- इदमेव प्रथमाश्चर्यम् ।

अयोध्याकाण्डे द्वितीयमाश्चर्य निहितं निम्नलिखिते पंक्तियुग्मे-

**रघुकुलरीति सदा चलि आई ।**

**प्राण जाहुं बरु वचनु न जाई ॥**

अस्माकं देशस्य मनीषिभिः प्राणेभ्योऽधिकं वचनपालनमहत्त्वं स्वीकृतम् । यो मनुष्यः सत्यमिदं स्वीकुरूते असौ आकाशस्य अपत्यतां गच्छति, महति कुले जातः कुलश्रेष्ठो भवति ।

एतेषां शब्दानां महिमा मनसि अङ्कितो भवतीति द्वितीयमाश्चर्य ममकृते वर्तते । अरण्यकाण्डे सूत्रात्मकतया तृतीयमाश्चर्यं प्रोतं चौपाई–छन्दसि आह्लादकञ्च–

**अस अभिमान जाई जनि भोरे ।**

**मैं सेवक रघुपति पति मोरे ॥**

अहम् अस्तित्वस्य समग्रस्य दासः, समग्रमस्तित्वं मम स्वामित्वं भजते । एतादृशं गौरवम् , एतादृशो गरिमा वर्तते मनुष्यास्तित्वस्य । तुलसीदासेन मह्यं शिक्षितं यद् आगतोऽस्मि जगते उपयुक्तो भवितुं , सेवकोऽस्मि, विश्वम् आराध्यं सेवायोग्यं वर्तते इति ।

रामायणे किकिन्धाकाण्डे चतुर्थमाश्चर्यं वर्तते यथा

**अब प्रभु कृपा करहु एहि भांति ।**

**सब तजि भजनु करौ दिनराती ॥**

इयं सुग्रीवस्य उक्तिः । सुग्रीवो विषयासक्तो वर्तते । स पलायनपरः सर्वपरिस्थितिषु । गोस्वामी तुलसीदासः प्रभुमूर्तिं कृपामयीं वर्णयति । सुग्रीवः सर्वमायां परित्यज्य रात्रिंदिवं प्रभोः स्मरणं, भक्तिञ्च कर्तुमीहते तदेव चतुर्थमाश्चर्यं वर्तते ।

सुन्दरकाण्डे पञ्चममार्श्चर्यं निहितमस्ति यन्मे भूयोऽरोचत । अत्रहनुमता विपत्तेः परिभाषा कृताऽस्ति । का नाम विपत्तिः ?

**कह हनुमंत विपति प्रभु सोई ।**

**जब तब सुमिरन भजन न होई ॥**

परमतत्त्वस्य स्मृतिः स्मृत्या च भजनेनैव भवति सैव कथ्यते । या स्थितिः स्मृतिमेव विस्मारयति तस्या अन्या नात्र विपत्तिः । विपत्तेरत्र नूतना परिभाषैव सुन्दरजीवनस्य परमाश्चर्यमस्ति ।

लङ्काकाण्डे षष्ठे सोपाने असुराय तमोगुणिने मनुष्याय प्रयुक्तं वाक्यं षष्ठमाश्चर्यं वर्तते ।

**संत कहहिं अस नीति दसानन ।**

**चोथेपन जाईहि नृप कानन ॥**

अत्र शास्त्रोक्तिर्नास्ति, साधुपुरुषस्य सत्यंकथनमस्ति । साधूनां नीतिः प्रीतिरूपा भवति, नीतिवत् बन्धनकारका न भवति । प्रीतिवन् मुक्तेरवकाशं ददाति, मुक्तिदायिनी नीतिर्भवति । चतुर्थावस्थायां राज्ञा वनवत् जीवनं यापनीयम् । कालिदासेन रघुवंशे कथितं यद् वार्धक्ये

मुनिवृत्तीनाम् । लङ्काकाण्डं सङ्घर्षस्य काण्डं वर्तते । अन्तः करणस्य विरागः – त्यागो विकसितो भवेत् सङ्घर्षे – तदेव महाद् आश्चर्यं दृश्यते ।

सप्तममाश्चर्यं पश्यन्तु —

**सरल सुभाव न मन कुटिलाई ।**

**जथालाभ संतोष सदाई ॥**

उत्तरकाण्डस्य चोपाई– पङ्क्तिद्वयं सूत्रात्मकं वर्तते । साधकस्य मनसि सारल्यं चिरस्थायि भवेत्, मनसि अन्यान् प्रति कटुता नश्येत्, न दृढाग्रहो जायेत । विनैव सन्तापनिवेदनं, विना वचनपारूष्यम् आत्मनि आत्मनैव सन्तुष्टत्वं, परमसंतोषस्य अमृतोद्गार एव उत्तरकाण्डस्य आश्चर्यमस्ति सप्तमम् ।

## ५१. गुरूरात्मदीपप्रज्वालकः ।

दार्शनेषु गुरोरावश्यकता सिद्धा वर्तते । एकोऽन्यो विचारोऽप्यस्ति यद् आत्मप्रबोधाय गुरोरावश्यकता नास्ति । बुद्धो मन्यते'अत्मदीपो भवेति' । त्वमेव स्वात्मनो दीपो भवेति कथ्यते, किन्तु दीपो भवेदस्माकं किन्तु प्रजवालनार्थ गुरुरावश्यकः, गुरुः कवचावरणं भूत्वा (निवातस्थानं भूत्वा वा) दीपं वात्यासारात् त्रायते । रामचरितमानसे अतएव कथितम् –

**कवच अभेद विप्रगु पूजा**



विवेकप्रधानस्य गुरोराश्रयः साधकार्थं महार्हं कवचं वर्तते । मन्दिरे पुरोहितः दीपे तैलं निधाय देवस्य समक्षं प्रस्तौति । गुरुः मन्दिरपुरोहितोऽस्ति, असौ साधकं प्रज्वाल्य प्रभोः समक्षं नयति, कामं गुरुर्नास्ति स्वयमेव ईश्वरः ॥

## ५२. पञ्चामृतं गुरुविद्याऽस्ति ।

मम जीवने पितामहेन त्रिभुवनदासगुरुणा प्रदत्तः पञ्चवाक्यात्मक उपदेशः पञ्चामृतमस्ति । तदेव मे साफल्यकारणमस्ति । इयमेव गुरुणा प्रदत्ता विद्या वर्तते । मया रामचरितमानसस्य दीक्षा पितामहाद् अधीता । तेन पञ्चमहावाक्यानि गुरूपदेशरूपेण शिक्षितानि ।

(१) 'सत्यं ब्रूयात् , प्रियं ब्रूयात् ॥' अयमुपदेशः भगवता मनुनापि दत्तः ।

(२) अहङ्काराद् स्वात्मा रक्षितव्यः । अहङ्कारात् मुक्तिर्न शक्या । अहङ्कारः अन्तः करुणरूपो वर्तते । पितामहेन अतीतानागतयोर्दर्शनं कृत्वा कथितं भवेद् यद् रामायणान् तव कीर्तिर्व्याप्ता भविष्यतीति । तदापि रामायणगानेन स्वप्रसन्नतां रक्षितुमहङ्काराद् स्वात्मा रक्षणीयः–अहङ्कारात् सावधानतया दूरे स्थातव्यम् ।

(३) ईर्ष्यानिन्दे परिहर्तव्ये । प्रसन्नसाधनायां इमे बाधके वर्तते ।

(४) रामचरितमानस–भगवद्गीताग्रन्थयोर्नित्यपाठः। पारायणपरायणे जीवने भगवत्परायणं जीवनं प्रामाणिकमस्ति। जनकल्याणेन सह स्वात्मकल्याणमपि कर्तव्यम्।

(५) जीवने अधिकाधिको मौनाश्रयः। मौनेन हरिस्मृतिः सततं भवति।

इदं पञ्चामृतं विश्वायापि कल्याणकृत। एतत् न केवलमस्मिन्नेव जीवने, जननान्तरेष्वपि पर्याप्तमस्ति।

मया पितामहोपदेशः सदैव आत्मसात् कृतो वर्तते।

## ५३. मनःसङ्कल्पविकल्पाःसाघनाबाधकाः ।

साधकस्य साधनायां सन्मार्गप्रवृत्तायां कुटुम्बिनां सहयोगः अपेक्ष्यते। यथा देहयात्रायां शरीरङ्गानि सहयोगं ददति तथैव साधनायां सर्वस्य सहयोगोऽनिवार्यः। किन्तु साधकाय स्वमनल्ःसङ्कल्पविकल्पा एव बाधकाः। बुद्धेः व्यभिचारित्वं, भक्तेरेकनिष्ठताभावः, स्वाहङ्कारातिशयः एतत् सर्वं मनः विचलितं करोति। वस्तुतः साधनापथि गृहस्थाश्रमेऽपि सिद्धिः शक्या। अन्तःशत्रुपराजय एव आवश्यकः।

## ५४. कथा पुण्य-पावित्र्य-प्रसन्नतादायिनी ।

जनाः कथं श्रुण्वन्ति। तुण्डे तुण्डे मतिर्भिन्ना इति न्यायेन कोऽपि बुद्ध्या, कोऽपि कुतूहलेन कथां श्रुण्वन्ति। अहं स्वयं मम कथायाः मूल्याङ्कनं करोमि तद् लक्ष्यते यन् मम कथायाः त्रयो हेतवः सन्ति।





**( १ ) स्वान्तः सुखाय तुलसीरघुनाथगाथा।**

**राम कथा स्वात्मने सुखं ददाति॥**

**( २ ) मोरे मन प्रबोध जेहिं होई।**

**अर्थात् कथया मम मनः प्रबुद्धं भवति॥**

**( ३ ) निज वाणी पावनि करन।**

**रामकथया वाणी पवित्रा भवति॥**

अहं नास्मि तुलसीदासः, अहं मोरारिबापूः। अयं मार्गः तुलसीनिर्मितो वर्तते। अहं मम पद्भ्यां मम मनसा चलामि। कथया पवित्रतायां वृद्धिर्भवति। मनः प्रबुद्धं भवेत् वा किन्तु वाणी पवित्रा भवत्येव, मम प्रसन्नतायां वृद्धिर्भवति। 'प्रसन्ने चित्ते परमात्मदर्शनम्' इति भगवत्पादानां शङ्कराचार्याणां सूत्रम् अस्ति। अहं पवित्रता+प्रसन्नता= परमात्मा इति मम कथायां प्राप्तव्यं मन्ये। एतन् मम स्वात्मनो मूल्याङ्कनमस्ति। स्वविविक्तं सदैव रक्षणीयम्।

अहं यायावरः। अहं पर्यटनशीलः। कथाः स्थाने स्थाने प्रचलन्त्येव। कदाचित् वयं कारयाने उपविश्य गच्छामः। कारयानस्य काचं पिधाय अन्यत् स्थानं गच्छामः तदा काऽपि मक्षिका कारागृहस्था भवति। कदाचित् शताधिकविंशतिकिलोमीटरमिति गत्या कारयानं गच्छति तदा मक्षिका अवश्यमेव काचद्वारेण सङ्घट्टिता भवेत्, किन्तु मक्षिका

कदापि न सङ्कुट्टिता भवति। सा कारयाने स्वस्थानम् अन्वेषयति। कदाचिद् आसने कदाचित् स्कन्धे कदाचित् नियन्त्रणचक्रे स्वावकाशं रचयति । तथैव अहम् अपि कार्यक्रमेषु सुखददुःखदप्रसङ्गेषु विविधावसरेषु गच्छामि। तदापि जनसङ्कुले स्थले मम विविक्तं रक्षामि। अहं सामान्यमपि वृत्तं ध्यानपूर्वक श्रुणोमि। प्रतिस्थितिं अहं मम विविक्तं रक्षामि। एकाग्रतायाम् एकस्य अग्रता वर्तते विविक्ते स्वध्यानं सुरक्षितं भवति । विविक्ते अहम् अपि एकस्मै अग्रतां ददामि। इदमेकं सत्यं भवेत् करुणारूपं वा भवेत्।

## ५५. विवेकिगुर्वाश्रयः साधकाभेद्यकवचम् ॥

गुरुविषयकाणि नैकानि दर्शनानि रचितानि सन्ति। गुरुः अनिवार्यः, उपकारकश्च इति सर्वदर्शनानां मतम् । वस्तुतः मनुष्येण स्वयमेव यात्रा कर्तव्या। अतः अन्तकाले भगवता बुद्धेन 'अप्प-दीपो भव' (आत्मदीपो भव) इत्युक्तम् । दीपस्तु वर्तते किन्तु दीपप्रज्वालनस्य अवश्यमेव आवश्यकता वर्तते । गुरुरेव आत्मज्योतिषः प्रज्वालनं करोति ।

गुरुः आत्मदीपं प्रज्वालयति किन्तु संसारवात्यासाराः तं निर्वापयन्ति तदा गुरुः काचपटलायते । अतः रामायणे कथितमस्ति, '**कवच अभेद विप्र गु रूपूजा ।**' विवेकप्रधानस्य गुरोः आश्रयः साधकस्य महत् कवचम् अस्ति। पुरोहितः मन्दिरे देवसमक्षं दीपं प्रज्वालयति। तदा देवः दीपे न घृतं पूरयति । यदि दीपः तैलविहीनो भवेत् तदा देवः न किञ्चित् करोति। देवो न दीपशिखामपि समीचीनां करोति। पुरोहितः एतत् सर्व करोति किन्तु असौ न देवः । यः पुरोहितो भूत्वा दीपान् प्रज्वालयति स गुरुरेवास्ति। अतः गुरुः न प्रभुः, किन्तु दीपप्रज्वालकः पुरोहितकल्पः ।

## ५६. पुरुषार्थचतुष्टयसाधकं शिक्षणं धर्मः, न व्यवसायः ।

प्रायः शिक्षणाद् आरभ्य लोकशिक्षणपर्यन्तं मम शिक्षणयात्रा वर्तते । शिक्षणं पुरुषार्थचतुष्टयसिद्धिकरं वर्तते । शिक्षणं धर्मोऽस्ति, न व्यवसायः । प्राचीनकाले गुरवः तपोवनेषु शिक्षणं दत्त्वा दक्षिणां प्राप्नुवन् । अतः शिक्षणेन धनलाभः समीचीनः किन्तु शिक्षकस्य कृते शिक्षणप्रदानं तस्य धर्मो भवेत् । अधुना शिक्षणाद् धर्मः भ्रष्टः, केवलम् अर्थोपार्जनम् अवशिष्टमम्। शिक्षणं सर्वेषां कार्यम् अपि वर्तते। यथा ग्रामे कृषकः स्वपुत्राय कृषि- शिक्षणं ददाति, कुम्भकारः मृत्तिकाकलां शिक्षयति तथैव सर्वमपि ज्ञानं शिष्याय दातुं मनसि कामना भवेत्। इत्थं शिक्षणं नाम पुरुषार्थः। शिक्षणेनैव अस्माकं मोक्षः। या मुक्तिं ददाति सा विद्या। यया अर्थप्राप्तिः शक्या सा विद्या। इत्थं पुरुषार्थचतुष्टयस्य सिद्धिकारकं शिक्षणं श्रेष्ठं वर्तते।

## ५७. प्रतिष्ठा निन्दा-कर-ग्रहीत्री ।

यदा मनुष्यः यशो लभते, प्रतिष्ठां लभते तदा जनाः तस्य निन्दां कुर्वन्ति, तस्य प्रतिष्ठा मलिनीकर्तु प्रयतन्ते। अत एव अहं कथयामि यत् यथा सर्वकारः धनोपार्जने करान् गृहणाति तथैव प्रतिष्ठापि मनुष्यात् निन्दारूपं शुल्कं-करं-गृहणाति । अहं प्रतिदिनं करं ददामि । केचित् पत्रैः केचित्

पत्रव्यवहारेण मम निन्दां कृत्वा प्रतिष्ठां न्यूनां कर्तु प्रयतन्ते। आलोचना वा टीका व असूया वा सर्वमपि शिवस्य तृतीयं नेत्रं वर्तते।

जननिन्दात्मकं तृतीयं नेत्रं मां दृष्ट्वा उद्घाटितं भवति तदा निन्दकस्य, टीकाकारस्य स्वरूपे अहं शिवदर्शनं करोमि। गुरुकृपया तृतीयं नेत्रं केवलं कामं दग्धुं प्रभवति रामं दग्धुं न प्रभवति। रामस्य अहर्निशं स्मरणं मां निन्दायाः रक्षति सहस्रशत-असूयकानां मध्येऽपि निन्दकानां मध्येऽपि अहं सुरक्षितः अवशिष्टः। अतः प्रतिष्ठा-व्यक्तेः प्रतिभां दूषयितुं प्रयत्नं करोति। प्रतिष्ठा निन्दा'कर'-ग्रहीत्री वर्तते।

## ५८. रक्षकं शिक्षणम् प्रेमवीक्षणः शिक्षकः।

शिक्षकाय नानाविधा उपाधयः सन्ति। 'शिक्षाशास्त्री' 'विद्यावाचस्पतिः' इत्यादयः उपाधयः सन्ति। मानवजीवनस्य रक्षकं शिक्षणमस्तीति मे मतिः। छात्रस्य ज्ञानं परिपाल्य, र्वनं कृत्वा सर्वभयेभ्यो रक्षति तदेवास्ति शिक्षणम्। मनुष्यः शिक्षणेन स्वजिह्वाम् असत्यवचनाद् रक्षति, अनृतव्यवहाराद् रक्षति स्वात्मानम्, मृत्यो रक्षति जीवात्मानम्।

प्रेम्णा वीक्षणं यस्य सः। स एव शिक्षकः। अथवा प्रेमपूर्वकं वीक्षणं यस्य स शिक्षकः। शिक्षकदृष्टिः शिष्यं भाररहितं कर्तु क्षमा भवेत्। बालके अस्माकं प्रीतिर्वर्तते। अत एव वयं तं वोढुं क्षमाः। तथैव शिक्षकोऽपि शिष्याज्ञानभारं वोढुं क्षमः। शिष्यं यः प्रेमपूर्वकं ज्ञानमार्गे वहति स एव शिक्षकोऽस्ति। कृष्णो विश्वप्रेम्णः पर्यायोऽस्ति। अत एव सर्वे कृष्णं वन्दे जगद्गुरुम् इति वदन्ति। रक्षणं हस्तेन भवति, वीक्षणं नेत्रेण भवति। मनुष्यो हस्तयुक्तोऽस्ति, विहगः पक्षयुक्तोऽस्ति। शिक्षकस्य समीपे रक्षणार्थ हस्तौ भवतः, शिष्यं ज्ञानगगनं नेतुं पक्षौ भवतः। अत एव शिक्षकः प्रेमवीक्षणो भवेदिति मे मतिः।

'द्वा सुपर्णा सयुजा' मन्त्रो गुरुशिष्ययो रूपकमप्यस्ति। गुरुशिष्यौ ज्ञानवृक्षोपासकौ स्तः। ज्ञानामृतफलास्वादकः शिष्यो भवेत् तथा गुरुणा व्यवहर्तव्यम्॥

## ५९. 'जयति' शब्दात् 'प्रियोऽस्ति' उचितः।

यदा यदा वयं 'जयति' 'सत्यमेव जयते' 'रामो विजयतेतराम्' इत्यादीनि वाक्यानि वदामः तदा तदा द्वन्द्ववशात् पराजयोऽपि नेपथ्ये तिष्ठति। यदा सत्यस्य जयो भवति, धर्मस्य जयो भवति तदा असत्यस्य नाशो भवेत् , अधर्मस्य नाशो भवेदिति मनसि वर्तते। वस्तुतः सत्येन जयपराजययोः नास्ति सम्बन्धः। वयं कस्मात् 'राम''धर्म''सत्य' इत्यादीन् शब्दान् वा सन्दर्भान् वा द्वन्द्व-कारागारे रुन्ध्मः ? गोस्वामिभिः तुलसीदासैः कथितं यत् '**प्रिय लागहु मोहि राम**' रामः प्रियोऽस्ति '**रामः प्रियतमोऽस्ति**' तदा सर्वमपि जगत् प्रियमस्ति यतो विश्वमपि तेन निर्मितं, तस्यैवांशोऽस्ति।

'**सीयराममय सब जग जानी**' इत्यपि प्रसिद्धम्। अत एव 'रामो जयति' इत्यस्माद् वाक्याद् ऋते 'रामः प्रियोऽस्ति-प्रियः

स्याद्' इति मह्यं रोचते । यदा रामः प्रियोऽस्ति तदा तस्य एव विजयोऽस्ति ।

## ६०. 'सद्गुरुः' 'गुरुः' शब्दात् साधीयान् ।

सद्गुरुः शब्दो मे प्रियतमोऽस्ति । गुरोः असौ साधीयान् श्रेयाँश्च । 'सदगुरुः' शब्दः मध्यकालीनभजनेषु प्रयुक्तः । वस्तुतः गुरुः ब्रह्मा, विष्णुः, महेश्वरः, गुरुरेव परं ब्रह्म, किन्तु कालवशात् गुरौ कलिमलः प्रविष्टः स्यात् । अत एव 'सदगुरुः' इत्ययं शब्दः साधीयान् । सद्गुरुः सन्मार्ग प्रत्येव नयति शिष्यम् ।

'गुरुः' इत्यस्मिन् शब्दे गकारः गगनव्यापकत्वं सूचयति । गुरुः ज्ञानेन अमेयः, सङ्कीर्णतारहितः, विशालहृदयो भवेत् । गुरुः गङ्गाप्रवाहवत् निर्मलः पवित्रोऽपि अस्ति । रामायणे कथितम् '**गुरु विवेकसागर जगु जाना ।**' गुरुविवेकसागरोऽस्ति । गुरोर्देहः कामं घटसदृशः स्यात् किन्तु मानुषे देहघटे असौ गगनं धारयति । वयं गगनं स्कन्धे, मस्तके, हस्तयोर्धारयामः, वहामः, किन्तु गगनस्य नास्ति भारः, घटोऽपि यत्र कुत्रचित्-पानीयस्थाने, पीठे, भूमौ-यत्र तत्र निवेशयितुं शक्यः । तथैव गुरुरपि अभिमानरहितः, अहङ्काररहीनः, ज्ञानभाररहितः भवेत् ।

गकारश्च ग्रन्थस्य सूचकः । गुरुः सजीवो ग्रन्थः । सर्वे ग्रन्थाः समाविष्टाः भवन्ति । गुरुः विवेकसागरः गणेशसदृशः । गणेशादधिको न कोऽपि विवेकी । रामायणे गणेशः मातृभक्तो निरूपितः । गणेशः पृथिव्याः





प्रदक्षिणां परित्यज्य पार्वतीपरमेश्वरयोः प्रदक्षिणां करोति । अत एव गुरुरपि माता, स एवास्ति पिता । '**मोरे तुम्ह प्रभु गुरु पितु माता**' इति गोस्वामिनः तुलसीदासाः कथयन्ति । गुरुः गिरः गकारोऽस्ति । गुरुवचनं, गुरुवाणी, गुरुगिरा, गुरोः शब्दे - एतत् सर्व समाविष्टं भवति सदगुरुः सच्चिदानन्दोऽस्ति । इत्थं गुरुतत्त्वं सर्वलक्षणभूषितं वर्तते ।

## ६१. परमात्मा पाषाणे चैतन्यप्रदाता ।[ जेरुसलेममदेशे कृता कथा ]

ईसुख्रिस्तस्य समीपे एका निराधारा स्त्री समागता । ईसुख्रिस्तस्य कालस्य असौ अहल्या आसीत् । सर्वे जनाः पाषाणगुटिकाभिः तां भृशमताडयन् । रामायणस्य अहल्या न अपलायत् । किन्तु स्थैर्यमगच्छत् । रामायणस्य अहल्या स्वयमेव पाषाणरूपा आसीत् । अतः पाषाणगुटिकां क्षेप्तुं न कोऽपि समर्थ आसीत् । ईसुख्रिस्तस्य अहल्या स्वात्मानं त्रातुम् ईश्वरस्य पुत्रस्य समीपं गता । रामायणस्य अहल्यायां रामस्य चरणारविन्दस्पर्शोऽभवत् । ख्रिस्तस्य 'अहल्या' ख्रिस्तस्य पादयोः अपतत् । रामायणं कथयति यत्, '**गै पतिलोक आनन्द भरी ।**' रामः अहल्यायाः पत्या सह पुनर्मेलनं कारयति । ईसुख्रिस्तस्य कथायां तस्याः पतितायाः किमभवद् इति वयं न जानीमः । अहं न तुलनां करोमि । किन्तु दर्शनं कारयामि । प्रसङ्गद्वये साम्यं वर्तते । यदि धर्मयोः भित्तिः दूरीभवेत् तर्हि सर्वत्र साम्यं वर्तते । असावेव प्रकाशः सर्वत्र द्योतते ।

## ६२. प्रकाशः कारागृहोस्थो न कर्तव्यः ।

ईसुख्रिस्तेन कथितं यद्, **'अहं विश्वस्य प्रकाशः ।'** भगवता कृष्णेनापि कथितं यत्, **'तेजः तेजस्विनामहम्, बलं बलवतामस्मि, बुद्धिः बुद्धिमतामस्मीति ।'** प्रकाशोऽपि परमात्मनो विभूतिलृलः ।

प्रकाशः परमात्मनो दिव्यविभूतिः । अतः प्रकाशं-दीपं-प्रज्वाल्य पर्वतशिखरसदृशम् उन्नतस्थानं नयन्तु, उच्छ्रियमाणं नयन्तु । यतः दीपतेजः चतुर्दिक्षु प्रसरेत् । मा कुरुत प्रकाशं गृहभित्तिकारागृहस्थम् । प्रकाशं मा बन्दिनं कुरुत । न कुत्रापि भित्तिः अवशिष्येत । तत्त्वतः धर्मयोर्मध्ये भित्तिं विनाशयतु । धर्माणां भित्तयः, धर्मैः रचिता भित्तयः विनाशनीयाः ।

## ६३. गुरुचरणौ स्मर्तव्यौ ध्यातव्यौ ।

अहल्या श्रीरामचरणरजः परागस्पर्शेण पवित्रा जाता । गौतमशापवशाद् अहल्या पाषाणीभूता । कदाचित् स्वस्खलनप्रायश्चित्तार्थं सा मूकीभूता । कुमार्गं गतां स्वचञ्चलतां संहर्तुं सा उपाविशत् । यदा कोऽपि मनुष्यः स्वचाञ्चल्यं त्यक्त्वा स्थैर्यं भजति, तदा तेन अयोध्यां न गन्तव्यम् । स्थिरभक्तं प्रति रामः स्वयमेव आगमिष्यति । वयं मनुष्याः । अतः पापानि भवन्ति । स्खलनानि भवन्ति, किन्तु तेषां पुनरावर्तनं न भवेत् तदा स्वयमेव परमात्मा अस्माकं समीपे आगच्छति ।



विश्वामित्रः पतितस्त्रियः पक्षपाती । यतः विश्वमित्रो न कापि व्यक्तिः । स विश्वामैत्रीमयी चेतना । असौ महर्षिः पाषाणस्य आत्मनः शब्दं श्रृणोति, 'अहल्या न किञ्चित् ब्रवीति किन्तु, स्वयं ऋषिः कथयति-

**''गौतम नाारि श्राप बस उपल देह धरि धीर ।**

**चरन कमल रज चाहति कृपा करहु रघुबीर ॥''**

**'कमलम्'** अर्थात् सङ्गरहितः आचारः । अत्र चरणे एव कमले कमलोपरि परागरजः भवति । चरणयोः मृत्तिकारजः श्लिष्यति । यदा चरणे कमले भवतः । तदा मृत्तिकारजः परागरजः भवति । अहल्या रामचरणरजः स्पृहयति । अत्र कानिचित् काराणानि सन्ति :-

(१) अहल्या सुन्दरी आसीत्, किन्तु तस्याः रुचिः, न सुरुचिः ; किन्तु कुरुचिः आसीत् । यतो महात्मना गौतमेन सह निवसन्ती सा सहस्राक्षम् अकामयत । अतः रामस्य चरणरजः कुरुचिं नाशयति । अहल्यायां पुनरपि चरणरजःसुगन्धं प्रविशेत् , तस्याः वासनादुर्गन्धः दूरीभवेत् । अत एव सा रामचरणरजः स्पृहयति ।

(२) रामो विश्वगुरुः । गुरुचरणरजः कुरुचिं नाशयति, यथा रामचरिते मानसे कथितं **–'बन्दउ गु रूपद पदुम परागा ।'**

(३) रामो रसमयोऽस्ति । अहल्या नीरसा बभूव, यदा कोऽपि मनुष्यः स्खलनं करोति तदा स नैराश्ये(Depression) जीवति । रामस्य चरणरजो रसमयं वर्तते ।

**( ३ ) बन्दउ गु रूपद पदुम परागा ।**

**सुरुचि सुबास, सरस, अनुरागा ।**

अहल्या इन्द्रं प्रति रागवती जाता । रागः स्थूलप्रेम्णः पर्यायः । रागस्य शमनम् अनुरागेण भवति । रामस्य चरणकमलपरागः अहल्यायै अनुरागं दातुं समर्थः । अतः कथितं —**'चरणकमलरज चाहती'**

(१) अहल्या मनोरोगपीडिता जाता । आश्रमवासिनीं तां कामनाः अभ्यद्रवन् । कामरोगात् मुक्तिं प्राप्तुं रामस्य अर्थात् गुरोः चरणरजः एव औषधम् । अपथं गमनम् अपि रोगः ।

**( २ ) अहल्या शङ्करसदृशी वर्तते ।** यद्यपि शिवः कामविजेता अहल्या कामग्रस्ता किन्तु समुद्रमन्थनकाले शिवः विषपानं चकार । अहल्या पतिशापविषं पपौ । शिवः सर्पभूषणः, अहल्याऽपि सर्पभूषणा, यतः कामसर्पेण सा दष्टा । शिवलिङ्गस्वरूपे शिवः स्थाणुः तथैव अहल्या अपि पाषाणमयी । अहल्या शिवसदृशी अस्ति, किन्तु सा विभूतिः नास्ति । रामचरणरजः विभूतिः, अतः सा रामकृपां ययाचे ।

(३) अहल्या अमङ्गलकृत्यम् अकरोत् । पापस्य छायया मनसि अप्रसन्ना जाता । अमङ्गलप्रवृतिः अप्रसन्नतायाः जननी । रामस्य चरणरजः प्रसन्नतादायिनी । **'मंगल मंजुल मोद प्रसूति।'**भगवदाश्रितस्य, गुरुचरणाश्रितस्य मनसः मालिन्यं दूरीकर्तुं चरणरजः समर्थम् ।



(४) गुरुचरणरजः-रामचरणरजः-वराकानि कलङ्कानि नाशयितुम् अलम् । विश्वामित्रः कथयति- 'हे राम ! भवच्चरणरजस्तिलकेन अहल्यायाः सर्वकलङ्कानि नक्ष्यन्ति । अपि च गुणगणः प्रत्यागमिष्यति । यथा **जनमन मंजु मुकुर मल हरनी । किएँ तिलक गुन बन बस करनी ।'**

(५) अहल्यया नेत्राभ्यां परपुरुषदर्शनपापं कृतम् । यदि नेत्रद्वयम् इन्द्रं नाद्रक्ष्यत्, तर्हि अहल्या आकृष्टा नाभविष्यत् । नेत्रदोषं दूरीकर्तु नयनामृतस्य आवश्यकता वर्तते । गुरुचरणरजः नयनामृतं भवति । रज एव अञ्जनमस्ति यथा **'गुरु पद रज मृदु मंजुल अंजन । नयन अमिअ दृग दोष बिभंजन ॥'**अत एव अहल्या रामचरणरजः कामयामास ।

(६) कदाचित् मोहवशात् विवेको विनश्यति । रामस्य चरणरजसः सुविवेकदृष्टिं दातुं सामर्थ्यं वर्तते, यथा – **'तेहि करि विमल विवेक विलोचन । बरनऊँ रामचरित भवमोचन ॥'**विश्वामित्रः कथयति- 'हे राम ! भवच्चरणधूलौ विवेकदानकौशलं वर्तते ।'

(७) सद्गुरुचरणरजसः प्रेम्णो जन्म भवति, भक्त्या जन्म भवति । यतः चरणरजसा रजोगुणः नश्यति । इत्थं रजसो महिमा वर्तते । परमात्मनः गुरुमहाराजस्य चरणरजसा सर्वमपि प्राप्यते ।

**६४. भारतं न चमत्काराणां, साक्षात्काराणां राष्ट्रम् ।**

ईसुख्रिस्तः जलात् सुरानिर्माणं चकार । अहं कथयामि यत्, 'यत्

किञ्चिद् वस्तु स्यात् किन्तु तत् कस्य हस्ते वर्तते तदेव महत्त्वपूर्णम्।' अहं अत्र सुराशब्देन भौतिक-सुरायाः ग्रहणं न करोमि। अहं दृढं विश्वस्तोऽस्मि यत् बुद्धपुरुषः जलम् अपि स्पृशेत् तदा जलम् अपि हरिनामसंकीर्तनादीप्सितं जनयति। **'नाम खुमारी नानका लगी रहे दिन रैन।'**यदा हरिनाम्नः मदोऽनुभूयते तदा जलमपि अमृते परिवर्तते। जलं जीवनोत्साहं दातुं शक्नोति। ऋग्वेदे मन्त्रोऽस्ति यथा- **'इदमापः प्रवहत यत्किं च दुरितं मयि। यद्वाहमभिदुद्रोह यदा शेप उतानृतम्॥'**

ऋषिः प्रार्थयति यत्, 'हे जलदेवते! जानता अजानता वा मया किञ्चिद् दुरितं कृतम्, तत् प्रवाहय तथैव प्रवह।' (श्रीसांईगुरुणा जलं तैले परिवर्तितम् अपि च जलाद् दीपाः प्रज्वालिताः इति प्रसिद्धम्।)

यथा भगवान् वेदः कथयति यत्, 'अस्माभिः यद् अनृतम् उक्तं पापात्, द्रोहात्, क्रोधाद् वा अकर्म कृतं तद् हे जलदेवते! प्रवाहय।' 'हरिनाम' पापं दूरीकरोति। हरिनाम जलवत् प्रवहन्ती करुणा वर्तते। अत एव विश्वामित्र उवाच- **'चरितं रघुनाथस्य शतकोटिप्रविस्तरम्। एकैकमक्षरं पुंसां महापातकनाशनम्॥'**

अत एव अहं कथयामि, यत् 'भारते सर्वचमत्काराः प्रत्यक्षाः यतो भारतं स्वयमेव चमत्कारः, अयं चमत्काराणां देशो नास्ति, साक्षात्काराणां देशो वर्तते।'



## ६५. नम्रता परमेश्वररूपिणी।

जेरुसलेमनगरशब्दे **'सलेम'**अर्थात् उर्दूभाषायां सलाम अर्थात् 'वन्दनम्'। वन्दनं शान्तिसूचकम्। उपनिषत् सूचयति यत्, 'सह नाववतु सह नौ भुनक्तु...' सर्वेषां सहास्तित्वं शान्तिमयं भवेत्। मा विद्विषावहै अर्थात् वयं परस्परं द्वेषरहिता भवेम। ईसुख्रिस्तः पर्वतशिखरं जगाम। तेन सह केचिज्जनाः जग्मुः। ते पप्रच्छुः, 'को ननु धन्यः? को ननु धन्यः? इति।' ख्रिस्तः प्रत्युवाच- 'जीवने नम्रो भवेत् स एव पृथिव्या राज्यस्य स्वर्गराज्यस्य च अधिकारी भवेत्।' भगवान् वेदः नम्रतां परमेश्वररूपिणीं मत्वा वन्दनं करोति। ऋषिः कथयति यत्, 'अहं नम्रतारूपिणीं परमेश्वरीं नमामि। नम्रता माम् उच्चैः नयतु। अहङ्कारात् कृतानि पापानि नम्रता क्षालयत्विति।'

अहं वारं वारं कथयामि यत्, 'नाम' जपतु। भगवन्नाम्नो जपं करोतु। 'नाम' इति शब्दे 'नम्' धातु वर्तते। यदा भगवन्नाम जपतु अथवा कस्यचिदपि नाम वदतु तदा नम्रतापूर्वकं वदतु। वेदे आपोदेवताया वन्दना कृता। 'आपः' अर्थात् प्रवाहमय्याः विचारधारायाः वन्दना। ईसुख्रिस्तः अपि नम्रतां समर्थयति।

## ६६. ईसुख्रिस्तस्य पञ्चवस्तुषु पञ्चामृतम्।

ईसुख्रिस्तः पञ्चवस्तुषु श्रद्धधाति। तेन पञ्चवस्तुनां समर्थनं कृतम्।

### (१) नम्रता

## ( २ ) सारल्यम्

ईसुख्रिस्तस्य जीवनं नम्रतया सह सरलमासीत् । केचित् जनाः व्यवहारेषुर मौग्ध्यं, निश्च्छलत्वं, निष्कापट्यं प्रदर्शयन्ति किन्तु, अन्तःकरणेषु नम्रता न भवति, यदि कोऽपि रजोगुणमयानि वस्त्राणि धारयति तदा तान् द्विषन्ति । महापुरुषाः निरातङ्काः सौख्यकारिणः (Comfortable) न सन्ति । विजयार्थं न खड्गस्य वा बोम्बस्य आवश्यकता । केवलं प्रेम्णा, करुणया, निष्कापट्येन विजयः प्राप्यते । ईसुख्रिस्तः नम्रश्च सरलश्च आसीत् ।

## ( ३ ) स्वार्पणं, बलिदानं वा ।

यदा ईसुख्रिस्तस्य मृत्योः उद्घोषणा जाता तदा सर्वैः कथितम् – 'पलायस्वेति ।' ईसुख्रिस्तः प्रत्यवदत् , 'अहं मरणं न कामये किन्तु पलायनं न करिष्यामि ।' इयमेव स्वार्पणस्य, समर्पणस्य वृत्तिः । अन्येभ्यः स्वात्मनः त्यागः ।

## ( ४ ) प्रेमैव ईश्वरः ।

इदं सार्वभौमं सूत्रं वर्तते ।

## ( ५ ) सत्यम् ।

इत्थं सारल्यं, नम्रता, बलिदानं, सत्यम् इति पञ्चवस्तूनि पञ्चामृतं वर्तते । अभ्याक्रामिभाषया (Aggressive) सत्यस्य कथनम् अथवा





सरलभाषया सत्यस्य कथनं सर्वेषां स्व-स्वभावानुसारं भवति, किन्तु यत्र दम्भो वर्तते, धर्मान्धता वर्तते, धर्मकञ्चूके अधर्मो विकसित स्तत्र सत्यस्य उद्घोषणा आत्मस्य निर्भयतां प्रदर्शयति । वेदधर्मोऽपि पञ्चामृतमयो वर्तते ।

## ६७. करुणा नेत्रनिवासिनी ।

मानसकरुणायाः गानं जापाने कर्तुम् इच्छामि । यदि अत्र करुणायाः वृष्टिः अभविष्यत् तर्हि अत्र बोम्बवृष्टिर्न अभविष्यत् ।

करुणायाः पुत्री अहिंसा । सत्यस्य पुत्रः अभयः । प्रेम्णः पुत्रः त्यागः । सत्याद् अभयं प्राप्यते । यो निर्भयो भवति स एव शान्तः । प्रेम्णः त्यागस्य जन्म ।'**त्यागात् शान्तिः**' इति भगवद्गीता कथयति । करुणायाः अहिंसा जायते । यः अहिंसकः सः शान्तोऽपि भविष्यति । अत एव अहं हिरोशिमां शान्तिनगरीं कथयामि ।

यस्य मनः निष्कपटं भवेत् स एव रामं प्राप्नोति । अतः तुलसीदासः कथयति–

**'निर्मलमन जन सो मोहि पावा ।**

**मोहि कपट छल छिद्र न भावा ॥'**

यो मनसा निष्कपटः सः करुणापूर्णः । प्रेम्णः स्थानं हृदये भवति । सत्यस्य जिह्वायां किन्तु, करुणा मनुष्यनेत्रयोः निवसति । विश्वस्मिन्नपि

विश्वे युद्धं न भवेत् अत एव अहं 'करुणा'इति शब्दं चिनोमि । कोऽपि लक्षवारं आक्रमणं कुर्यात् तथापि करुणा न त्याज्या ।

**६८. द्वादशविधं मनः ।**

मनसो द्वादशनामानि सन्ति । **मृतकमनः** यन्मनः संवेदनशून्यं वर्तते तदेव मृतकमनः । तादृशं मनः करुणां वा प्रेम न जानाति । द्वितीयम् अस्ति **कपिमनः**, चञ्चलमनः, निरन्तरं उच्छलन् मनः । तृतीयं मनोऽस्ति **मत्स्यमनः** । मत्स्यवद् इदं मनोऽपि चञ्चलं, किन्तु तस्य चाञ्चल्यं रसैव वर्तते । रसासिक्तं चञ्चलमनो मत्स्यमनः । विषयासक्तं मनः विषयजाले शीघ्रमेव गृह्यते । चतुर्थं मनोऽस्ति **मृगमनः** यथा – मारिचस्य मनः । हरिणो यदा धावति तदा त्वां प्रति पश्यति । पुनरपि धावति, पुनरपि त्वां पश्यति । पुनरपि धावति । हरिणः त्वां सततं प्रेक्षते किन्तु असौ दूरं गच्छति । यन्मनः हरिं पश्यति किन्तु हरेः दूरं गच्छति तन्मनः मृगमनोऽस्ति । पञ्चमं मनः **मतङ्गमनः** अस्ति । मदोन्मत्तम् , अहङ्कारपूर्णम् अहङ्कारग्रस्तं मनो गजसदृशं वर्तते । षष्ठं मनः **मशकमनः** । इदं मनः निरन्तरं मशकवद् दशति । सप्तमं मनः स्वात्मनि **प्रसन्नं मनः** । कविषु, सङ्गीतकारेषु, गायकेषु ईदृशं मनः । वस्त्राणि न सन्ति, वैभवं नास्ति तथापि ईदृशं मनः अन्यान् प्रति न पश्यति । अष्टमं मनः **मुकुरमनः** । दर्पणसदृशं मनः । शुभाशुभकर्माणि दर्शयति । तुलसीदासः कथयति–

**'श्री गुरुचरन सरोज रज निज मन मुकुर सुधारी ।'**



दर्पणाः कदाचित् मलिनाः भवन्ति । अतः मनोऽपि स्वच्छं कर्तव्यम् । नवमं मनः **मलिनं मनः** । ईदृशं मनः शुभेषु अशुभं पश्यति । दशमं मनः महन्मनः । यन्मनः महत्, विशालं, संकीर्णतारहितं, तादृशं मनः महतां–साधुपुरुषाणां मनः । एकादशं मनः **म्लेच्छमनः** । ईदृशं मनः हिंस्त्रं, राक्षसकल्पं, सदैव दुष्टतां कर्तुं , संलग्रम् । द्वादशं मनः **मोहनं मनः** । भगवान् कृष्णः गीतायां कथयति यत् , 'इन्द्रियेषु अहं मनः ।'मोहनं मनः परमात्मस्वरूपम् । यैः हिरोशिमायां बोम्बस्फोटः कृतः तेषां मृतकमनःकार्यमासीत् । इयं घटना दारुणा आसीत् । अगस्तमासस्य ते दिवसा भयानकाः आसन् । अतः एव अहं कथयामि यत् , **'करुणा संसारतारिणी अस्ति ।'**

**६९. मनोमालिन्यवशात् करुणा नानुभूयते ।**

ईश्वरः परमकरुणाशीलः वर्तते । मनुष्याः परस्परं चपेटां ददति, घातयन्ति, प्रहरन्ति, पातयन्ति, गालीप्रदानं कुर्वन्ति किन्तु परमात्मा कदापि क्रुद्धो न भवति । परमात्मनः करुणा, गगनकल्पा विशाला, समुद्रकल्पा, गभीरा, प्रसूनकल्पा वर्तते । वयम् ईश्वरस्य करुणायाः अनुभवं न कुर्मः । यतः वयं अपात्राणि, कुपात्राणि वा स्मः । यदा घटो मलिनो भवति तदा तस्मिन् निक्षिप्तं दुग्धं व अमृतमपि विकृतिं याति । अतः ईश्वरः कारणं विना अपि करुणां करोति । यदि मनुष्यस्य चित्तं प्रसन्नं भवति तदा सः परमात्मदर्शनं करोति । अत एव शङ्कराचार्यः कथयति, **'प्रसन्ने चित्ते परमात्मदर्शनम्' इति ।'** तुलसीदासः कथयति,–

**'जेहि करुना करी कीन्ह न कोहू ।**

**काबहुँक करि करुना नर देही ॥'**

(यस्मिन् न कोऽपि करुणां करोति, तस्मिन् त्वं करुणां करोषि ।)

**७०. मृत्युः परमानन्दः ।**

महाभारते भगवता वेदव्यासेन मृत्योः निरूपणं सुन्दरीरूपेण कृतम् । कथ्यते यत्–

**'मरने से सब जग डरा मेरो मन आनंद ।**

**कब मिलही कब भेंट हो पुरन परमानन्द ॥'**

मृत्युर्भयावहो नास्ति । मरणात् कस्मात् भयम् ? अस्माकं जीवनं तु लाभगुणरूपं, कृपागुणरूपं वर्तते । अहं यदा प्राथमिकशालायाम् अपठम् , तदा पञ्चत्रिंशत् गुणाङ्कैः परीक्षा उत्तीर्णा भवति स्म । कोऽपि छात्रः त्रिंशत् गुणान् अलभत । तदा पञ्चगुणाङ्कान् कृपारूपेण दीयते स्म । अत एव पञ्चत्रिंशत् वर्षाणि यावत् आयुः साफल्यं प्राप्तुं भवति । पञ्चत्रिंशद् उत्तरं यद् आयुः तद् भगवतः कृपागुणरूपेण वर्तते । बुद्धपुरुषः कदापि न म्रियते । मृत्युः तु परमरमणीयः वर्तते ।

**७१. परमार्थवादः परमवादः, वादो विभूतिः संवादो विभूः ।**

वादविवादैः न किञ्चित् प्राप्यते । अधुना समाजवादः, साम्यवादः , वादविवादः – इत्यादयः नैके वादाः सन्ति । भगवद्गीतायां वादो भगवद् विभूतिरूपेण कथितः । वादो विभूतिरस्ति, संवादः प्रभुः । कथ्यते यद् –

**'यह सुभ संभु उमा संबादा ।**

**सुखसम्पादन समन बिषादा ।'** (इयं कथा उमाशम्भुसंवादमयी शुभा, विषादशमयित्री सुखदायिनी अस्ति ।)

ब्रह्म ज्ञातुं तर्काः निरर्थकाः । ब्रह्म ज्ञातुं वादावलम्बनं निरर्थकम् । ब्रह्मा, शिवः, नारदः, सनत्कुमाराः – एते सप्तपरमार्थवादिनः सन्ति ।

**७२. भरतः नित्यसंन्यासी ।**

रामायणे भरतः सर्वाश्रमेषु आदर्शरूपः स गृहस्थोऽपि नित्यसंन्यासी । भरतः जगतः स्वार्थं जानाति स्म, किन्तु परमार्थत्वं पूर्णरूपेण अजानात् । भरतः चारित्र्यमूर्तिः आसीत् ।

**'कहहिं परस्पर मिलि दस पाँचा । भरत सनेहु सीलु सुचि साँचा ।'**

भरत प्रेम, शीलं च एकत्र वर्तते । प्रेम पवित्रं भवति । चारित्र्यं शीलं वा सत्यं भवति । प्रेम अपवित्रं न स्यात् , शीलं असत्यं न भवेत् ।

**७३. विश्वासो गुणातीतः ।**

तुलसीदासाः कथयन्ति यत् , **'भवानीशङ्करौ वन्दे श्रद्धाविश्वासरूपिणौ ।' 'भवानी'**अर्थात् पार्वती श्रद्धा वर्तते । शिवः विश्वासरूपः । नारदः उमायाः गृहम् आगच्छति । मेनाहिमालयौ पुत्र्याः

नामकरणं कर्तुं नारदं प्रार्थयतः । नारदः कथयति, 'भवतोः पुत्र्याः नैकानि नामानि, '**नाम उमा अंबिका भवानी ।**' पार्वत्याः चरित्रं पितृभ्यां कीर्तिं दास्यति। सा पातिव्रत्यस्य धर्मस्य परमा आचार्या , चरमा सती भविष्यति । हिमालयः पुत्र्याः पतिविषयकं प्रश्नं पृच्छति तदा नारदः वदति, '**अगुन अमान मातु पितु हीना । उदासीन सब संशय छीना ॥**' (तस्याः पतिः निर्गुणः, अभिमानहीनः, मातृपितृहीनः, उदासीनो भविष्यति ।)

एतानि सर्वाणि विश्वासस्य लक्षणानि वर्तन्ते। विश्वासः अगुणः भवेत् , गुणातीतो भवेत् , विश्वासः कस्य संततिः ?विश्वासः अजन्मा वर्तते। विश्वासः उदासीनः। उच्चैः स्थितः। वस्तुतः संशयमुक्तावस्थायाः अपरं नाम विश्वासोऽस्ति। किन्तु विश्वासं प्राप्तुं तपः अनिवार्यम्। अत एव पार्वती तपः कृत्वा विश्वासं प्राप्नोति ।

**७४. सत्सङ्गः चतुर्विधः ।**

विवेकं प्राप्तुं सत्सङ्गः अनिवार्यः । अस्माकं जीवने विवेको नास्ति । भगवान् पतञ्जलिः यस्मै अविद्या कथयति स एव अविवेकः अस्ति। अविवेकात् क्लेशो जायते। अतः सत्यम् असत्यं दृश्यते, असत्यं सत्यं लक्ष्यते। शत्रुः मित्रं लक्ष्यते, मित्रं शत्रुः लक्ष्यते। अत एव कथ्यते, '**बिनु सतसंग बिबेक न होई ।**'विवेकार्थं सत्सङ्गः अनिवार्यः। कवितां पठतु, साहित्यं वाचयतु, नाटकस्य मञ्चनं पश्यतु । एते सर्वे सत्सङ्गस्य प्रकाराः। मौनम् अपि सत्सङ्गो वर्तते ।



(१) मनसा सह संवादो भवेत् । असौ मनसः सत्सङ्गः । गोस्वामिनः कथयन्ति, '**मोरे मन प्रबोध जेहि होई ।**'भगवद्गीता कथयति यत् ,'**इन्द्रियाणां मनो भगवतो विभूतिः वर्तते ।**'अतः मनसा गाली न दातव्या ।

(२) शरीरेण सह सत्सङ्गं करोतु। यदा शरीरं वदति तदा शृणोतु। शरीरं वदिष्यति यत् , 'अतीते अहं सुन्दरम् आसम्। मम कोमला त्वक्, सुन्दरा दन्तपङ्क्तिः, सुन्दरागतिः आसीत् । अधुना अहं वृद्धं जातमिति ।' इत्थं शरीरं महच्छास्त्रं वर्तते। शरीरं साधनं मत्वा सदुपयोगं करोतु।

(३) धनेन सह सत्सङ्गं करोतु। अहं धनसञ्चयं कर्तुं न उपदिशामि। धनं सुखं प्राप्तुं अर्जितम्, किन्तु शान्तिः कुत्र गता ? अतः धनविषयकः सत्सङ्गः कर्तव्यः ।

(४) बुद्धपुरुषेण सह सत्सङ्गः। सद्गुरुणा सह सत्सङ्गः । यः साधूभिः सत्सङ्गं न करोति सः परमार्थाद् वियुक्तो भवति । मानसे लिखितम्– '**सदगुरु बैद बचन बिस्वासा ।**

यः साधुवचनेषु साधुसङ्गतौ न विश्वसिति, सः कल्याणं न लभते यथा– '**जे नहिं साधुसंग अनुरागे ।**
**परमारथ पथ बिमुख अभागे ॥**' यः मानसिकस्तरेणापि साधुसङ्गतिं न करोति स परमार्थपथाद् विमुखः, हतभाग्यः वर्तते। अतः यूयं श्रद्धावतां उपासकानां सत्यप्रियाणां अभिमानरहितानां सत्सङ्गं कुरुत ।

## [ जेरुसलेमकथा ]

**७५. 'ईश' 'इसु' 'इसा' – महिमा मानसे ।**

'मानसे' अर्थात् रामचरितमानसे । रामचरितमानसे 'ईशः'(इस), 'ईशः(ईसु)', 'ईशा'(ईसा), इति शब्दत्रयस्य महिमा वर्तते । एते त्रयः शब्दाः परमात्मवाचकाः । जेरुसलेमदेशः ईशुख्रिस्तस्य भूमिः वर्तते । ईशुख्रिस्तः परमात्मतत्त्वपुरुषः इति उद्घोषितम् । रामचरितमानसे एते शब्दाः प्रयुक्ताः सन्ति ।

यथा–

**'जेहिं जेहिं जोनि करम बस भ्रमहीं । तहँ तहँ ईसु देउ यह हमहीं ।**

**सुभ अरु असुभ करम अनुहारी । ईसु देई फलु हृदय बिचारी ॥'**

अयोध्यावासिनः प्रार्थयन्ति यत् 'हे ईश्वर ! प्राक्तनकर्मवशात् यस्यां यस्यां योनौ अस्माकं भ्रमणं भवेत् , संसरणं वा भवेत् तत्र तत्र वयं भवतः सेवकाः भवेम इति कर्तव्यम् ।' अस्माकं स्वामिनौ सीतारामौ स्तः । तयोः 'पार्वतीपरमेश्वरौ', 'राधाश्यामौ', 'खुदा', 'अल्लाहः', 'ईश्वरः', इति यद् वा तद् वा नाम भवेत् । तत्र न कोऽपि भेदः । अयोध्याकाण्डे अयोध्यावासिनः अत एव भगवते स्वभक्तिनिवेदनं कुर्वन्ति यद् ईश्वरस्य सर्वशब्देषु तस्य एव कीर्तनमस्ति ।



**७६. सत्यदर्शने रामदर्शनम् ।**

अहं कतिपयदिवसेभ्यः वारं वारं कथयामि यत् रामदर्शनार्थं हठाग्रहं मा कुरुत इति । कदाचिद् यूयं दुःखिनः भविष्यथ । कोऽपि भक्तः रामं न लभेदिति शक्यम् । यतः यूयं यत्र कुत्रापि प्रेम्णः दर्शनं कुरुथ, सत्यदर्शनं कुरुथ तत्र तत्र राम एवास्ति । कृष्णो वंशीवादक एव नास्ति । असौ वंशीं वादयन् युस्माकं समीपे आगच्छेदिति न अनिवार्यम् । कदाचित् भवतां कल्पनायाः कृष्णस्य दर्शनं न भवेदिति सम्भाव्यम् । युस्माकं बालकेषु, पत्न्यां, पतौ, श्वश्रौ, वध्वाम्, भ्रातरि, प्रतिवेशिनि, समग्रमनुष्यजातौ, जीवजगति यदि प्रेमानुभवो भवेत् तर्हि तत्र तत्र कृष्णः उपस्थितः । यत्र यत्र सत्यस्य दर्शनं तत्र तत्र रामदर्शनमिति मे मतिः ।

**७७. जातिवर्णरहितं शिवतत्त्वमात्मपर्यायः ।**

जातिभ्यः पृथक् वर्णेभ्यः पृथक् शिवतत्त्वमेव आत्मनः पर्यायोऽस्ति । राजकोटनगरे केनापि पृष्टम् , 'भवान् कोऽस्ति ?' इति । मया विचार्य – सुविचार्य कथितं यद् 'अहं न कस्मिन्नपि वर्णे , न कस्यामपि जातौ, न कस्मिन्नपि धर्मे वर्ते ।' अहं यज्ञोपवीतं प्रथममधारयम् । मया मस्तके शिखाऽपि धृता । किन्तु नाहं ,संन्यासी भवितुम् इच्छामि । मया शिखायज्ञोपवीतौ त्यक्तौ, अतः अहं नास्मि ब्राह्मणः । शस्त्रेषु नास्ति रुचिः । अतः नास्मि क्षत्रियः । अत एव मया वैष्णवीयदैन्यपूर्वकं भगवतो रामस्य हस्तात् शस्त्राणि मोचितानि । गुरुमुखात् प्राप्ता विद्या मया न कदापि विक्रीता । अत एव अहं नास्मि वैश्यः । यः

अन्यान् शूद्रान्निति मन्यते, स एवास्ति शूद्रः, अतः अहं नास्मि शूद्रः ।

**७८. सत्यमेकवचने, प्रेम द्विवचने, करुणा बहुवचने ।**

सत्यम् एकवचनम् अस्ति । सत्यपालनं वैयक्तिकमस्ति । अन्ये सत्यस्य निर्वहणं कुर्युः इति हठाग्रहं मा कुरुत । सत्यं मम कृते वर्तते, अतः एकवचनम् अस्ति । प्रेम द्विवचने वसति । प्रणयं कर्तुम् अन्यस्य आवश्यकता वर्तते । यदि त्वं वृक्षे प्रणयं कर्तुम् इच्छसि तर्हि वृक्षस्य आवश्यकता । यदि कोऽपि नद्यां प्रणयं करोति तर्हि नद्याः आवश्यकता । अहो बत ! कोऽपि स्वात्मनि स्निह्यति तर्हि स्वात्मनः उपस्थितिः अन्वेषणीया । करुणा बहुवचने वर्तते । समग्रसंसारार्थं करुणा भवति ।

**७९. ईश्वरे दृढा श्रद्धा सर्वार्थसाधका ।**

सर्वेषु विश्वासः कर्तव्यो वा न कर्तव्य इति प्रश्नो भवेत् । गोस्वामिनः तुलसीदासाः निश्चित्य वदन्ति यत् , **'एक भरोसो, एक बल एक आश, विश्वास ।'** किं महापुरुषवचनेषु विश्वासो न कर्तव्यः ? स्मरन्तु भवन्तो यत् , 'सर्वेषां वचनानि श्रोतव्यानि किन्तु ईश्वरे विश्वासः, ईश्वरे श्रद्धा केवलं सर्वार्थान् साधयति । यदि यूयं जनेषु विश्वासं करिष्यथ तर्हि वञ्चना भविष्यति इति निश्चितम् । स्वयं युगः क्षणे क्षणे युष्मान् वञ्चयिष्यति इति न विस्मर्तव्यम् । यथा ईशपुत्रोऽपि स्वजनैर्वञ्चितो यथा वा भगवान् रामोऽपि ।'

**८०. सर्वत्र सर्वस्मिन् सर्वस्य कल्याणभावना धर्मौदार्यम् ।**

अस्माकं धर्मस्य औदार्यमस्ति यत् , 'सर्वत्र सर्वस्य सर्वस्मिन् कल्याणभावना कर्तव्या ।' जेरुसलेमदेशे अहं यहूदीश्रद्धानुसारं भित्तिं स्प्रष्टुं गतः । अस्मिन् मार्गे पूर्वकाले ईशपुत्रो जगाम इति जना मन्यन्ते । एषा भित्ति **'रोदनभित्तिः'** इति प्रसिद्धा । यहूदीधर्मस्य जनाः भित्तिं स्पृशन्ति । जनाः भित्तिच्छेद्रेषु संदेशमयानि लघुपत्राणि निवेशयन्ति । मया न स्थापितं किञ्चिदपि प्रार्थनापत्रं किन्तु चोपाईगानं कृतम् , यत् –

**'सब पर होई परम कल्याना ।**

**सोइ करहु अब कृपानिधाना ॥'**

इयं मे विज्ञप्तिः परमात्मनः समीपे अवश्यं गता भवेत् ।

एकस्मिन्नवसरे अहं लण्डननगरे महते मस्जिदस्थाने गतवान् । तत्र मौलाना मह्यम् अपृच्छत् , 'नमाजस्य समयः वर्तते भवान् अत्र आगतः । किं नमाजं करिष्यति वा ?'इति । मया कथितं यद्,'अहं नमाजस्य विधिं न जानामि किन्तु प्रार्थनां करिष्यामि' इति । इस्लामधर्मानुयायिनस्तत्र स्थित्वा बन्दगीं (प्रार्थनां) अर्कुवन् । अहमपि हस्ते मालां धृत्वा प्रार्थनां कृतवान् ।

अद्य मयापि भित्तिं पुरतः स्थित्वा प्रार्थना कृता 'हे परमात्मन् ! सर्वे सङ्घर्षाः, सर्वे विग्रहाः समाप्तिं यान्तु । सर्वेषां मङ्गलं भवेत् ।' सनातनधर्मस्य यद् औदार्यं वर्तते तदेवास्ति 'सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः' इति ।

## ८१. यहूदीधर्माज्ञासूत्राणि पूर्वप्रोक्तानि ।

अत्र यहूदी–ईस्लाम–हिन्दु–इति धर्मत्रयस्य त्रिवेणीसङ्गमो जातः । यहूदीधर्मे 'मोझीझ' महात्मना दशाज्ञामयो धर्मः स्थापितः । तेन त्रिसहस्त्रवर्षाणां पूर्वं दशाज्ञाः प्रवर्तिताः । बुद्धमहावीरौ भारते तत्पश्चाद् आगतौ । किन्तु कृष्णः पञ्च सहस्त्रवर्षाणां पूर्वं बभूव इति समग्रं विश्वं मन्यते । धर्मः संप्रदाययुक्तो भवेत् किन्तु सत्यं सम्प्रदायमुक्तम् अस्ति । प्रेम्णः कृते नास्ति कोऽपि वर्गः । करुणाय नास्ति सङ्घः प्रेम्णोऽपि नापि सम्प्रदायः । वैदिकपरम्परायां यहूदीधर्मस्य दशाज्ञाः पूर्वोक्ताः वर्तन्ते । यथा मोझीझः उवाच यत् 'मां विना अस्मिन् संसारे न कोऽपि अपरः परमात्मा ।' अतः मम अनुयायिनः अन्यं कमपि ईश्वरं न भजेयुः । इदं तेन न प्रथमवारम् उक्तम् , 'वैदिकसंस्कृतौ एकं सद् विप्राः बहुधा वदन्ति' इति वाक्यं प्रसिद्धम् । किन्तु अस्माभिः कथितम्, यत् 'एकोऽहं बहु स्याम् ।' कृष्णः कथयति, 'मामेव शरणं व्रज ।' परमात्मा वस्तुतः एक एव अस्ति । हिन्दूनामन्यः, ईस्लामधर्मस्य अन्यः, क्रिस्तधर्मस्य अन्यः इति वयं मन्यामहे । गोस्वामिनः कथयन्ति यत्–

**नर विविधकर्म अधर्म बहुमत सोकप्रद सब त्यागहू ।**

**विश्वास करि कहू दास तुलसी राम पद अनुरागहू ॥**

(२) मोझीझः उवाच– द्वितीयाज्ञा यन्मम मूर्तिः प्रतिमा वा न कर्तव्या । मम प्रतिमायाः पूजा न कर्तव्या । वेदेषु मूर्तिपूजा नास्ति । उपनिषत्सु मूर्तिपूजायाः प्रश्न एव नास्ति । ईश्वरस्य नास्ति कोऽप्याकारः । एकदा



ईसुख्रिस्तेन सरसः पाषाणे धान्यकणान् विकीर्णाः । शिष्या न किञ्चित् अवागच्छन् तदा ईसुख्रिस्तः अवदत् यद् यथा पाषाणे धान्यकणाः अङ्कुरिताः न भवन्ति । तथैव यदि भवन्तः मम पादस्पर्शं कुरुथ तर्हि मम वचनानि निरर्थकानि । मम वचनानां पालनं कुरुथ इति । अतः द्वितीयाज्ञा मूलमपि वेदधर्मे वर्तते यथा –

**निराकारमोङ्कारमूलं तुरीयं गिरा ज्ञान................गिरिशम् ।**

**नमामीशमीशान निर्वाणरूपं विभुं व्यापकं ब्रह्मवेदस्वरूपम् ।**

(३) मोझीझमहात्मनः तृतीयाज्ञा–''दम्भार्थं वा बाह्याचारार्थं मम नाम्नः स्मरणं न कर्तव्यम् ।''

भगवद्गीता बाह्याचारस्य निरसनं करोति । तुलसीदासाः कथयन्ति, यत्–

**'मन क्रम वचन छाडी चतुराई ।**

**भजन कृपा करिहहि रघुराई ॥'**

भक्तौ दम्भस्य स्थानं नास्ति । सर्वधर्मेषु कोऽपि दम्भं न करोति । सर्वेऽपि मौनभावेन ईश्वरं भजन्ति, किन्तु यदा भवान् दम्भं करोति तदा हरिसंकीर्तनं दुर्बलं भवति । अहं तु कथयामि यद् दम्भेन सहितम् अपि संकीर्तनं भवेत् । हरिसंकीर्तनं शक्तिसंपन्नम् ऊर्जायुक्तं वर्तते, दम्भो भक्तौ विलीनो भवति ।

(४) चतुर्थाज्ञा यहूदी धर्मेवर्तते यत् 'क्षेत्रे षड् वर्षाणि यावत् अलं युञ्जन्ताम् किन्तु सप्तमे वर्षे क्षेत्रे कृषिः न कर्तव्या। सप्ताहे षड् दिवसान् यावत् कर्म कर्तव्यं किन्तु शनिवासरे कुटुम्बेन सह विश्रामः कर्तव्यः।' इयं संसारव्यवहारार्थम् आज्ञा वर्तते। युष्माकं सेवकाः पालितपशवः अपि विश्रामं कुर्युः। शास्त्रेषु भट्टारकवारे विश्रामस्य विधानं वर्तत एव। वयम् अपि 'वसुधैव कुटुम्बकम्' इति मन्यामहे। विनोबामहोदयः 'जयतु जगदीति' अवदत्। यजुर्वेदे पशूनां कृते मन्त्रा विरचिताः सन्ति।

(५) यहूदीधर्मे मोझीझस्य पञ्चमी आज्ञा पितृभ्याम् सम्मानं दातव्यमिति। पित्रो समादरः कर्तव्य इति। उपनिषत्सु कथितमेव 'मातृदेवो भव।' पितृदेवो भव। न केवलं पित्रोः अपि तु श्वश्रूश्वशुरयोरपि समादरः कर्तव्यः। तयोरपि सम्मानं कर्तव्यम्। मार्गे ये केऽपि वृद्धाः, वृद्धप्रतिवेशिनः भवन्ति तेऽपि मातृ-पितृसदृशाः पूजनीयाः सन्ति। मातृत्वं वा पितृत्वं वा वैश्विकं सार्वभौमं वर्तते।

(६) मोझीझस्य आज्ञा वर्तते यद् 'हिंसा न कर्तव्येति।' इदं सरलं सूत्रं वर्तते। पतञ्जलि-मनु-व्यास-इत्यादिभिः इदमेव कथितम्। रामचरितमानसे गोस्वामिनः कथयन्ति यत्-

**परमधर्म श्रुति विदित अहिंसा।**

**पर निन्दा सम अघ न गरीसा॥**

अहिंसा अस्मत्परम्परायाः मूलस्रोतः।

(७) मोझीझेन आज्ञा दत्ता यन् मा व्यभिचारं कुरुष्वेति। कैकेयदेशस्य राज्ञा उक्तं यद्- 'अस्माकं जनपदे न कोऽपि चौरः, न कोऽपि व्यभिचारी, न कोऽपि धर्मविहीन इति।' अत्र व्यभिचारः न स्थूलः। भक्त्यामपि व्यभिचारो न भवेत्। अत एव भगवद्गीता भक्तिः अव्यभिचारिणी भवेद् इति कथयति।

(८) मोझीझस्य अष्टमी आज्ञा प्रतिवेशिनं प्रति अथवा कमपि अन्यं प्रति अलिकः साक्षी न भवेः इति। प्रतिभूः सत्यार्थं भवेः। मनुना समर्थितमेतत्।

(९) मोझीझः नवम्याम् आज्ञायां प्रोवाच यद् 'अस्तेयस्य व्रतं धारयात' इति। पतञ्जलिना अपि अस्तेयस्य गणना देवीसम्पदि कृता।

(१०) अन्तिमाज्ञा यहूदीधर्मे वर्तते यत् प्रतिवेशनः स्थावरजङ्गमसम्पतौ, परिवारे, भृत्येषु वा लोभः न कर्तव्य; उपनिषद् वदति, 'मा गृधः कस्यस्विद् धनम्।' यदा परमेश्वरः प्रत्यणु अनुभूयते तदा सर्वं खलु इदं ब्रह्म इति ज्ञायते। तुलसीदासः '**सीयाराममय सब जग जानी**'इति वदति।

इत्थं दशाज्ञामयं दर्शनमिदं केवलं यहूदी धर्मस्य न। वस्तुतः इदम् अस्माकम् एव दर्शनम् अस्ति। वयमपि एताः आज्ञाः अस्माकं कृतेऽपि कृता इति मन्यामहे।

## ८२. हिंसायाः धर्मेण नास्ति सम्बन्धः ।

कस्यापि धर्मस्य हिंसया नास्ति सम्बन्धः । महोम्मदपयगम्बरं हन्तुं सैन्यं तमन्वसरत् । महोम्मदः स्वानुयायिभिः सह गुहायां न्यलीयत । तत्र ऊर्णनाभस्य जालमासीत् । महोम्मदेन जालं दृष्ट्वा स्वजनाः तत्रैव रुद्धाः । स अब्रवीत्, 'अग्रतो न गन्तव्यम् । ऊर्णनाभस्य सृष्टेः विनाशं भविष्यति' इति । य ऊर्णनाभस्य जालस्य चिन्तां चकार, तस्य परम्परायां हिंसा कुत आगता ? महोम्मदः स्वशिष्यैः सार्धं ऊर्णनाभजालतन्तूनां विच्छेदो न भवेद् अतः भूमौ लुण्ठन् गुहां प्राविशत् । तस्य वक्षःस्थलं क्षतविक्षतं जातम् । तमनुसरन्तः केचिन् शत्रवः आगताः, किन्तु ऊर्णनाभजालान् दृष्ट्वा ते तत् स्थलं निर्जनं मत्वा प्रतिनिवृत्ताः ।

अतः न कोऽपि धर्मः हिंसां समर्थयति, उपदिशति वा ।

## ८३. सीतारामलक्ष्मणेषु ज्ञानकर्मभक्तिधाराः ।

अस्माकं धर्मे ज्ञानमार्गः, कर्ममार्गः, भक्तिमार्गश्चेति त्रयो मार्गा उपदिष्टाः । यत्र केवलं रामो निवसति तत्र ज्ञानमार्गस्य सङ्केतः । यदा सीतया सह रामः, तत्र ज्ञानभक्तिमार्गो वर्तते । लक्ष्मणो जाग्रदवस्थायाः प्रतीकमस्ति । लक्ष्मणः सदैव कर्मयोगी स्थितप्रज्ञः । अतः सीतारामलक्ष्मणेषु ज्ञानभक्तिकर्ममयस्त्रिवेणीसङ्गमो वर्तते ।

## ८४. विशुद्धप्रेमाश्रु ईश्वरादपि अधिकमहिमशालि ।

अश्रुबिन्दवः विश्वकरुणाप्रसूताः सन्ति । अश्रुबिन्दूनाम् इन्द्रियैः सह नास्ति सम्बन्धः । अश्रूणि संवेदनफलानि सन्ति । यस्य समीपे हृदयमस्ति स एव रोदिति । अश्रु इन्द्रियातीतमस्ति । रामः परब्रह्म, किन्तु भरतस्य प्रेम, भरतस्य अश्रूणि परब्रह्मणोऽपि परं वर्तते । भरतः भावाविष्टो बुद्धपुरुषः वर्तते । यदा भरतो राममयोध्यामानेतुं जगाम तदा सर्वे देवा भयान्विताः बभूवुः । बृहस्पतिः भरतस्य बुद्धिं दूषितां कर्तुं न शशाक । सरस्वत्यपि निषेधं चक्रे । सा उवाच, 'अहं मन्थरायाः बुद्धिं परिवर्तयितुं शक्नोमि, किन्तु भरतस्य निश्चयं परिवर्तयितुं न मे शक्तिरीति ।'

कृष्णावतारे वंश्याः या भावस्थितिः वर्तते सैव रामावतारे भरतस्य वर्तते । वंश्यां यथा कृष्णस्य नामैवास्ति तथैव भरतस्य चित्ते रामस्मरणं विना न किञ्चिदस्ति ।

**'मन थिर करहु देव डरु नाहीं ।**

**भरतहिं जानि राम परिछाहीं ॥'**

अतः भक्ताश्रूणां महिमा शब्दैः न वाच्यः । अत एव भगवद्गीता भक्तस्य महिमानं गायति ।

## ८५. सत्यस्य त्रिविधरूपाणि ।

सत्यं त्रिविधं भवति । एकं व्यावहारिकं सत्यम् । उपनिषत् कथयति, 'सत्यं वदेति । सत्यं विना विश्वव्यवस्था कठिना ।' गोस्वामिनः वदन्ति –

**'सत्य मूल सब सुकृत सुभाए ।**

**बेद पुरान बिदित मनु गाए ॥'**

द्वितीयम् अस्ति 'सापेक्षं सत्यम्।' आईन्स्टाईनमहोदयस्य सापेक्षतावादः प्रसिद्धः। वयं भारतीया हिमालयम् उत्तरस्यां दिशं पश्यामः, किन्तु चीनदेशीयाः दक्षिणायां दिशि हिमालयं पश्यति। अत्र एकं रूपं दृश्यते तत्र अपरं रूपं दृश्यते। अतः सत्यं सापेक्षं भवति। एकस्य सत्यमन्यस्मै असत्यं भवेदिति शक्यम्।

सत्यस्य तृतीयं रूपं 'निरपेक्ष-सत्यं' वर्तते। भगवान् बलेः त्रिविधसत्यस्य कामनां करोति। यदा साधकः निरपेक्षसत्यं प्रति गच्छति तदा भगवान् तं बन्धनस्थं करोति।

वस्तुतः ईश्वरो न कमपि बन्धनस्थं करोति, किन्तु जीवात्मा स्वात्मनः अहङ्कारवशात् बध्यते। बलेः दानवीरताया दर्पः तं बध्नाति।

## ८६. सगुणरूपमहिमशाली ईश्वरः।

बुद्धः करुणामूर्तिः वर्तते। किन्तु पूर्वकाले पूर्वाश्रमे वा स नासीत् करुणामूर्तिः, अन्यथा तेन निशीथे राहुलस्य त्यागो न कृतः स्यात्। गुणरहितो निरर्थकोऽस्ति ईश्वरः। यः कोऽपि महिमा स सगुणस्वरूपस्य वर्तते। यदि खञ्ज ईश्वरः आगच्छेत् तर्हि अस्माभिः सह को नृत्येत्? हस्तरहित ईश्वरः अस्मान् कथं स्पृशेत्? अत एव भक्तानां कृते ईश्वरोऽपि सगुणलीलां करोति। यथा ब्रह्मसूत्रे उक्तम्, 'लोकवल् लीलाकैवल्यमस्तीति।'

## ८७. स्वभावानुरूपा सेवा कर्तव्या।

ईसुख्रिस्तः सदैव अवदत्, 'अहं परमात्मनः पुत्रः।' अतः सर्वैः मिलित्वा तस्य नाशं कर्तुं योजना कृता। तस्य वधार्थं राज्यसत्ता च धर्मसत्ता च एकीभूय प्रयत्नान् अकुरुताम्। एकदा महान् धर्मगुरुः ईसुं भोजनार्थं निमन्त्रयामास। न केनाऽपि पादप्रक्षालनार्थं जलमपि दत्तम्। अतः यः कोऽपि सेवितुम् इच्छति, सः सेव्यमानस्य स्वभावानुरूपां सेवां कुर्यादिति सेवायाः मन्त्रः। यः एकमपि रूप्यकं न वाञ्छति, तस्मै कोऽपि पञ्चलक्षरूप्यकाणि दद्यात् तदापि असौ प्रसन्नः न भवति। तदैव एका वाराङ्गना आगता। सा स्वस्य नेत्राश्रूभिः जिससमहाभागस्य चरणौ प्राक्षालयत् तदा ईसुख्रिस्तः तस्याः केशपाशेन स्वपादौ प्रामार्जयत्। अपि च सः वाराङ्गनायै अभयवचनम् अददात्।

## ८८. स्वाभाविकतायां नियमितता।

ईसुख्रिस्तः अकथयत् यत्, 'यत्र सत्यं भवेत्, तत्र अहं साक्षित्वे उपस्थितो भविष्यामीति।' स सदैव कथयति यत्, 'सदैव नियमिताः भवन्तु इति।' यदा कोऽपि स्वभाविकतया आचरणं कुर्यात् तदा सः नियमितो भवेत्। अत्र वेदमन्त्रः प्रमाणम्-

**'स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव।**

**पुनर्ददताघ्नता जानता सं गममेहि॥**

सूर्याचन्द्रौ नियमितौ भ्रमतः । कदापि प्रकृतिः नियमानुल्लङ्घनं न कुरुते। अत एव वेदः कथयति यत्, 'ऋतं च सत्यं च तपसोद्यजायत' इति।

## ८९. दिनचर्यायाः साफल्यार्थं दशसूत्राणि ।

ईसुख्रिस्तस्य जीवनं सरलं, सरलानि वचनानि, चरित्रमपि सरलम्। तस्य सूत्राणि वेदेष्वेव वर्तन्ते। तस्य दिनचर्यायाः दशसूत्राणि आसन्।

(१) तव मुखं शुचिस्मितेन सुशोभितं भवेत्। प्रसन्ने चित्ते सर्वमपि प्रसन्नं विश्वम्।

(२) विना कारणं न क्रोधः कर्तव्यः। प्रातःकाले उत्थानसमये, भोजनवेलायां, भोजनपर्यवेषणकाले, शयनकाले, गृहाद् बहिर्गमनकाले अथवा प्रतिनिवर्तनकाले इत्थं षड् प्रसङ्गेषु क्रोधत्यागः कर्तव्यः।

(३) स्वलक्ष्यं निश्चित्य तत्प्राप्तुं यत्नः कर्तव्यः। येन लक्ष्यं न निर्धारितं सः अन्यान् निन्दन्ति।

(४) यस्य कस्यापि जनस्य परिचयो भवेत् तदा तस्य तस्य साक्षात्कारकाले तस्य रुचिः यस्मिन् विषये वर्तते तद् विषयं आधारीकृत्य संलापं कुरु। आत्मकेन्द्रितायाः त्यागं कुरु। श्रोता नीरसो न भवेत्। तथा व्यहर्तव्यां यथा गोस्वामिनः कथयन्ति-



**'बन्दउ गुरूपद पदम परागा। सुरुचि सुबास, सरस, अनुरागा।'**

(५) सर्वान्प्रति मैत्रीभावः स्वीकर्तव्यः यतो हि न कोऽपि शत्रुर्भवेत्। त्वं स्वयमेव अजातशत्रुः भविष्यसि। यतो मैत्री भागवतीयं भक्तिस्थानं वर्तते। सुहृद्भावः ईश्वरसान्निध्ये उपयुक्तः। यथा हि रामचरितमानसे परमेश्वरस्य प्रतिज्ञा वर्तते —

**'सखा सोच त्यागहु बल मोरे। सब विधि घटब काज मैं तोरे॥'**

(६) सदैव आशावादिनः सत्यवादिनो भवन्तु। सदैव मनोरथान् सेवन्तां यद् यदि न अद्य तर्हि श्वोऽपि मयि भगवद्भावो जागरितो भविष्यतीति। अध्यात्मजगति आशा शृङ्खलापि वर्तते। किन्तु आशावादिनः सत्यवादिनो भूत्वा भगवद्ध्यानं कुर्युः।

(७)उत्साहशक्तिं बलवत्तरां कुरुत। नैराश्यं न सेवन्ताम्। जीवनं रेलपट्टो नास्ति, यन् निश्चितमार्गेण एव गच्छेत्। जीवनं जलधारासदृशं वर्तते। अन्यान् सोत्साहान् दृष्ट्वा तान् निरुत्साहान् न कुरुत, न तेभ्यः ईर्ष्यत।

(८) अतीतस्य क्षतिषु-स्खलनेषु दृष्टिं विधाय अतीतस्खलनेभ्यो बोधं गृहीत्वा भविष्यन् मार्गस्य परिमार्जनं कुरुत। मा रोदनं कुरुत। अतीतक्षतिं विचिन्त्य मृत्युमपि महोत्सवं कुरुत।

(९) व्यक्तित्वस्य विकासः सत्कर्मैर्भविष्यति, न शब्दैः। केवलं व्याख्याभिः परिभाषाभिः जीवनस्य निर्माणं न भवति। मनुष्यः सत्कर्मैः स्वात्मानं विकसितं कर्तुं शक्नोति।

(१०) विपत्तिकाले मनो नैरश्याद् रक्षणीयम् । भगवद्गीतापि कथयति, '**संशयात्मा विनश्यतीति ।**'सत्याः दक्षपुत्र्याः विश्वासो रामस्य परीक्षाकाले दृढो नासीत् । रामचरितमानसे सत्याः आत्मा विश्वासात् चलित आसीद् इति वर्णितम् । अत एव नारदः पार्वतीं तपः कर्तुं कथयति । पार्वती तपसा शिवं क्रीतं दासं करोति ।

## ९०. साधवो नोग्राः, न सङ्घर्षप्रियाः, किन्तु व्यग्राः ।

ईसुख्रिस्तः कथयति यत् , 'नाऽहं शान्त्यर्थं किन्तु सङ्घर्षार्थम् आगतः, अहं पितरं करवालेन व्यस्तं कर्तुं, मातरं अधोमुखीं कर्तुम् आगतः इति ।' सर्वेऽपि शान्तिम् इच्छन्ति । 'सङ्घर्ष' इति शब्दः मह्यमपि न रोचते, किन्तु रामचरितमानसेऽपि'तरवारि' शब्दस्य प्रयोगो वर्तते । रावणः सीतायै क्रुध्याति तदा स कथयति –

'**सीता तैं मम कृत अपमाना ।**

**कटिहऊँ तव सिर कठिन कृपाना ॥**' इस्लामधर्मेऽपि शान्त्यर्थं करवालस्य निर्देशाः वतन्ते ।

वस्तुतः ईसुख्रिस्तस्य कथितव्यं भवेद् अहं ईश्वरस्य पुत्रोऽस्मि । नाऽहं शान्तिं वा सुखं वा भोक्तुम् आगतः । अहं तथा कथितानां जनानां नास्तिकतया सह, अधार्मिकतया सह सङ्घर्षं कर्तुमागतः । ईशपुत्रस्य कथनस्य व्यङ्ग्यार्थोऽस्ति यद् अहं पाषाणगुटिकाप्रहारान् सोढुम् आगतः ।



ईसुख्रिस्तः कथयितुम् इच्छति यद् 'या माता पुत्रीं तर्जयति तां व्यग्रां कर्तुमहमागत इति ।' साधुपुरुषा अपि देशकालानुरूपं वदन्ति ।

## ९१. पवित्रश्रेष्ठानन्दपुष्टिकरं धनं स्यात् ।

ऋग्वेदे 'इन्द्र' शब्दः परमात्मवाचकः । ऋषिः भगवते इन्द्राय कथयति यद् —

'**इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे ।**

**पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् ॥**' (ऋ.२-२१-६) ऋषिः कथयति, 'हे परमात्मन् ! श्रेष्ठानि द्रविणानि नो देहि । द्रव्यं श्रेष्ठं भवेन्न निकृष्टम् । निकृष्टं धनं न लाभदायकं, किन्तु हानिकारकम् । अतः दिव्यं धनं पवित्रं परोपकारार्थं कल्याणकारकं भवति ।' 'चित्तिं दक्षस्य' ऋचः अस्य शब्दस्य गर्भितार्थः अस्ति यद्,'धनवान् दक्षः अर्थात् चतुरो मतिमान् भवेत् ।' 'पोषं' अर्थात् पुष्टिदायकम् । धनप्राप्त्यानन्दः परमानन्दो भवेत् , आनन्दः पुष्टो जायेत । वाचि माधुर्यं देहि– 'हे परमात्मन् ! प्रतिदिनं शुभदिनं भवेत् ।' ईसुख्रिस्तः अपि बालकं कथयति यत्, 'त्वं जीवने निश्चिन्तो भवः ।' वेदवाक्येऽपि'चित्तिं दक्षस्य' अर्थात् चैतन्यस्य, चित्तस्य स्थैर्यमेवाभिप्रेतम् । ईसुख्रिस्तः कथयति यत् ,'सदैव शुभं चिन्तनीयं, शत्रुभ्योऽपि शुभं चिन्तनीयम् । यदि त्वं शत्रौ प्रणयं न करोषि तदा त्वम् अपि शत्रुवद् व्यवहरसि । प्रणय एव स्पर्शमणिरस्ति लोहं काञ्चने परिवर्तयितुम् ।'

## ९२. रामकथा भागीरथीकल्पा ।

रामकथा नैकसन्दर्भयुक्ता भागीरथीकल्पा वर्तते। कस्माद् वयं तां प्रणालीमिवं कुर्मः । गङ्गा गोमुखात् प्रभवति। सैव गङ्गा अस्माकं श्रद्धामये जगति विष्णोः पादारविन्दात् निर्गच्छति, सैव ब्रह्मणः कमण्डलौ ततः शिवस्य जटाजूटे त्रिषु धाराषु प्रवहति ततः गोमुखाद् गंगोत्र्याः गङ्गा भूत्वा प्रवहति मार्गे अन्याः नैका नद्यः तया सह मिलन्ति। अतः लघुका गङ्गायाः मूलधारायां अनेकाः नद्यः, अनेकानि निर्झराणि संगच्छन्ति। **तथैव मम रामकथाऽपि गङ्गा वर्तते ।** तत्र गङ्गासती–गोरांग ठाकर–दुलाभायाकाग–हरिन्द्र दवे–सुरेशदलाल–इत्यादीनां गुर्जरकविनां काव्यपङ्क्तय आगच्छन्ति। तथैव हिन्दी–उर्दू–संस्कृत–इत्यादिभ्यो भाषाभ्यः काव्यपङ्क्तय आगच्छन्ति । सर्व–काव्यपंक्तयः रामकथया त्रिवेणीसङ्गमं रचयन्ति । रामकथाप्रवाहं समृद्धं करोति । रामकथाप्रवाहे सर्वमपि प्रवहति ।

## ९३. एकाग्रचित्तेन कथापारायणश्रवणमाहात्म्यम् ।

रामायणकथायाः पारायणं श्रवणञ्च एकाग्रचित्ते कर्तव्यम्। भगवान् शिवो रामकथां चकार तदा केवलं सती पार्वती तां शुश्राव । एकदा पार्वतीकथायां, 'हम्' इति वक्तुं न शशाक तदा एकः शुकः 'हम्' इति प्रत्युत्तरं ददौ। शुकः पलायनं चकार। शिवः तं शुकं ग्रहीतुं तस्य पश्चात् दधाव। तदा सः शुकः शुकदेवो बभूव। सम्पूर्णं विविक्तं यत्र वर्तते तत्रैव कथा भवति ।

मम अनुजः कैलासे महादेवस्य छत्रछात्रायां दिवङ्गतः । शिवस्य कृपया मम–स्थितप्रज्ञत्त्वं सुरक्षितम् अभवत्। मया तस्य अन्त्येष्टिसंस्कारे गुर्जरकवेः–नरसिंहमहेता इत्याख्यस्य भक्तस्य काव्यं गीतम्। 'अद्यतनीयस्य क्षणो मधुरो वर्तते' (आज नी घडी ते रळीयामणी)... अतः कथायाः पारायणकाले, श्रवणकाले च चित्तस्य एकाग्रता महत्त्वपूर्णा । किन्तु स्थितप्रज्ञता ताटस्थ्यभावं ददाति हर्षशोककाले ।

## ९४. सर्वेभ्यः पूज्यभावो ब्रह्मविदां लक्षणम् ।

जना मम दर्शनं कर्तुम् आगच्छति। तेषां मयि पूज्यभावो वर्तते । किन्तु अहं मम इष्टदेवस्य हनुमतः समक्षं उपविश्यं हृदयेन कथयामि यत् जनाः न मम दर्शनं–कर्तुमागच्छति किन्तु मह्यं दर्शनं दातुमागच्छन्ति । मनुष्येषु कोऽपि देवीपूजकः भवेत्, कोऽपि वादकः कोऽपि डमरुवादकः, कोऽपि क्रीडाकरः नटः, शैलुषश्च भवेत्, कोऽपि निर्वस्त्रबालकः भवेत्। एते सर्वे अत्रागच्छन्ति। अहं 'नरसिंहमहेता' इत्याख्यस्य गूर्जरकवेः पङ्क्तिं स्मरामि 'ब्रह्म लटका करे, ब्रह्म पासे' (ब्रह्मैव ब्रह्मणः समक्षं लीलामाचरति ।) ब्रह्मविद् ब्रह्मवत् सर्वं पश्यति । अतः सर्वात्मभावेन पूज्यतागौरवं विस्मृत्य वर्तितव्यमिति मे प्रयत्नः ।

## ९५. साधनास्वातन्त्र्ये सङ्कल्पविकल्पा बाधकाः, न सम्बन्धाः ।

साधकस्य साधना समीचीनमार्गस्य भवेत् तदा परिवारजनानां सहयोगः अवश्यमेव प्राप्तो भवेत् । यथा शरीराय हस्तयोः, पादयोः,

नेत्रयो:, कर्णयो: इत्थं सर्वेषामङ्गानां सहयोगो वर्तत एव। तथैव साधनाया: अपि पिण्डो वर्तते । सर्वमपि पिण्डीभूतं भूत्वा साफल्यं ददाति । शनै: शनै: साधकस्य परिवार: वर्धतेतमाम् । तदा **वसुधैव कुटुम्बकम्** इति भावना साधनायां न बाधका किन्तु सर्वार्थ-साधका भवति । साधकस्य स्वातन्त्र्यमक्षुण्णं शिष्यते ।

मम मतानुसारं साधनायां वा स्वातन्त्र्ये वा साधकस्य मनस: सङ्कल्पविकल्पा एव बाधका: । यदा साधकस्य चित्तवृत्तय: नैकदिक्षु पलायन्ते, तस्य बुद्धिर्व्यभिचरति, तस्य धी: अव्यावसायात्मिका भवति तदा सा साधकस्य स्वातन्त्र्यं हन्ति । साधकस्य अहङ्कारोऽपि श्रेयोमार्गे बाधक: । तस्य स्वातन्त्र्ये परिवारजना: अथवा सम्बन्धा: न विघ्नकारिण:, न बाधका इति मे मति: । एतन् मया अनुभूतं ज्ञातं सत्यं वर्तते ।

## ९६. रामचरितमानसे विचारस्वातन्त्र्यम् ।

रामचरितमानसं विचारस्वातन्त्र्यं ददाति । अत्र नास्ति कोऽपि हठाग्रहो-दुराग्रहो वा । शिवो रामकथां श्रोतुं सत्या सह गत:, किन्तु सती रामकथां श्रोतुमनुत्सुका आसीत् । शिवेन आज्ञा न दत्ता । सती रामस्य परीक्षा कर्तुं जगाम । तदापि शिवो निषेधं न कृतवान् । यथा द्रव्येन सर्वमपि क्रेतुं शक्यम् तथैव सद्ग्रन्थेन सर्वमूल्यानां प्राप्तिर्भवति । स्वीकरो वा अस्वीकरो वा व्यक्तिविवेकोपरि निर्धारितो भवति ।

यथा वटवृक्षबीजे नैके वटा: समाविष्टास्तथैव **'बीज सकल ब्रत धरम नेम के'** इति वाक्यानुसारं रामायणेऽपि बीजवत् सर्वप्रश्नानां समाधानं



भवत्येव । कदाचित् भूमिभेदात्, ऋतुभेदात् , कालभेदात् परिवर्तनानि भवन्त्येव । अत: विसंवादेषु संवाद: अन्वेषणीय: ।

## ९७. रामकथायां वैयक्तिकसामूहिकविश्रान्ति: ।

रामकथायां वैयक्तिकी विश्रान्ति: लभ्यते । न केवलम् अयं वक्तु: श्रम: न यश:प्राप्त्यर्थं प्रयत्नोऽस्ति । रामकथा सर्वेषां विश्रामस्थानमस्ति । अत एव कथ्यते **'पायो परम विश्राम'** रामकथायां राम-सीता-लक्ष्मण-भरत-हनुमत्-शिव-विभीषणादीनां कथा सामूहिक -विचारपरिवर्तनेऽपि उपलब्धीनां माध्यमं वर्तते ।

अहं न कोऽपि सम्प्रदायस्य प्रवर्तक: । न कोऽपि भक्तजनानां गुरु: । अधुना प्रचारमाध्यमानि नैकानि । तथापि रामकथां श्रोतुं जनानां सङ्ख्या प्रतिदिवसं वर्धते । अतो रामकथा मोक्षदायिनी, शान्तिप्रदायिनी सामूहिकविश्रान्तिरप्यस्ति ।

## ९८. तनूजा-वित्तजा-कर्मजा भक्तिभेदा: ।

भक्तेस्त्रयो भेदा मया दृष्टा: । गुर्जरप्रदेशे तनूजा भक्तिर्दृश्यते । गुर्जरभक्ता: शरीरै: कथायां स्थिता भवन्ति । बहव: शरीरै: परिचर्यां कुर्वन्ति । अगणिता भक्ता: कथाश्रवणाय आगच्छन्ति । अत: अत्र तनूजा भक्तिरनुभूयते ।

भारतस्य विविधनगरेषु वित्तजा भक्ति: अनुभूयते । 'वित्तजा

भक्तिः' वल्लभ-संप्रदाये प्रचलितं पदं वर्तते। देशस्य नाना प्रान्तेषु जनाः चिकित्सालय-विश्वविद्यालय-विद्यालयनिर्माणार्थं धनं ददति।

विदिशेषु कर्मजा भक्तिः विशेषण लक्ष्यते। कथाश्रोतारो मन्यन्ते यत् कथाश्रवणानन्तरं किञ्चित् कर्तव्यं वर्तते। ते कर्तव्यनिष्ठतां दर्शयन्ति। वस्तुतः त्रिविधा भक्तिः सर्वत्र दृश्यते। सर्वेभ्यः कथाश्रवणं रोचते। सर्वेषां न्यूनाधिकं परिवर्तनमागच्छति। मेघवृष्टेरनन्तरं पृथ्व्यां परिवर्तनं धरित्र्येव जानाति।

## ९९. सत्य-स्नेह-सूत्र-स्वानुभव-स्मरण-शास्त्रात्मको उत्तमो वक्ता।

कथाकारः सत्यवादी-सत्यात्मको भवेत्। यदि स असत्यं भाषेत्, तदा नान्यो जानीयात् तस्य असत्यम्, किन्तु मनसि शल्यं भूत्वा वेदनानुभवः स्यात् स्वात्मनि। उदाहरणरूपेण कथितमपि असत्यं व्यासपीठाद् वक्तुं दुःखदायकम्।

सत्यमपि तथ्यं स्नेहात्मकं भवेत्। वक्ता सत्यमपि नैवेद्यवितरणवत् सस्नेहं वदेत्। असौ न क्षिपति पाषाणगुटिकाम्, किन्तु तस्य सत्यं फलप्रदानसदृशं देयम्।

तस्य भाषणं सूत्रात्मकं भवेत्। जना लाघवेन सन्तुष्टा भवन्ति। सूत्रस्य विस्तारो भवेत्, किन्तु सत्यस्य कथनं सूत्रात्मकमुचितम्। कथाकारस्य वक्तव्यं स्वानुभावात्मकं भवेत्। शास्त्रेण सह स्वानुभवः आवश्यकः। स्वानुभवमयी कथा रमणीया भवति।



उत्तमे वक्तरि स्मरणशक्तिरनिवार्या। स्मरणेन कथानुसन्धानमनवरतं भवति। असौ शास्त्रात्मकोऽपि भवेदेव।

'दृष्टान्तकुशलो धीरो वेदशास्त्रविशुद्धिकृत्' इति वक्तुर्लक्षणानि कथितानि भागवते।

**मानस-गोदावरी ( ५-९-२०१५ तः १३-९-२०१५ ) पर्यन्तं नासिकस्थाने कृता कथा।**

## १००. जीवसेवा प्रभुसेवा।

भवन्तः भजनैः, भक्त्या, ज्ञानेन अथवा अन्यसाधनेन भगवदुपासनां कुर्वन्तु, किन्तु अकिञ्चनानां दरिद्रनारायणानां सेवां कुर्वन्त्वेव। "मानवसेवैव प्रभुसेवेति" सूत्रं प्रसिद्धम्। किन्तु एकेन जैनमुनिना आलोचना कृता यत् 'मानवसेवैव प्रभुसेवेति कथनं न पूर्णम्। जीवमात्रस्य सेवा प्रभुसेवेति समीचीनम्। पर्वतानां सेवा, नदीनां सेवा, जलसेवा, पृथ्वीसेवा – इत्थं प्रतितत्त्वस्य सेवा कर्तव्या। रसायनयुक्तैः कृषेः उर्वरकैः (Fertilizers) भूमिः प्रदूषिता न भवेत्। यन्त्रालयधूमैर्नभः नभो प्रदूषितं न भवेत्। जलमपि प्रदूषितं न भवेत् तदपि दृष्टव्यम्। भूतदया अर्थात् पञ्चमहाभूतानां सेवा, तान् प्रति करुणा आचार्यविनोबा "जयतु जगत्" इति कथयति स्म। किन्तु अहं कथयामि यत्, "जयतु जीवः" जीवमात्रं प्रति करुणां धारयन्तु।

## १०१. पञ्चभूतैः पूजा।

रामचरितमानसं करुणायाः शास्त्रं, प्रेम्णः शास्त्रं, सत्यस्य शास्त्रम्। अस्माकम् अहङ्कारो सदैव बाधकः। अत एव रामनाम्नः त्यागो न भवेत्। वयं पूजायां पञ्चमहाभूतैः उपासनां कुर्मः। पृथ्व्यां नः आसनम्। जलेन आचमनं, अग्निना दीपप्रज्वालनं, वायुना धूमप्रसारः। अत एव वयं पञ्चमहाभूतैः पूजां कुर्मः। अत एव वयं आरात्रिकदीपं चतुर्दिक्षु नभसि च भ्रामयामः। भक्तजनाः पञ्चमहाभूतानां सेवां कुर्वन्तु।

## १०२. हरि-स्मरणविस्मरणे विपत्तयः।

रामस्य चरितं अति महच्चरित्रम्। रामचरितमानसे पञ्चचरित्राणि वर्तन्ते - शिवचरित्रम्, उमाचरित्रम्, भरतचरित्रम्, हनुमच्चरित्रम्, भूषुण्डिचरित्रञ्च। हे श्रोतारः ! यदा हरिस्मरणस्य विस्मरणं भवति तदा विपत्तिः आयाति अथवा हरिस्मरण-विस्मरणमेव विपत्तिः। यथा रामचरितमानसं कथयति -

**कह हनुमंत बिपति प्रभु सोई।**

**जब तव सुमिरन भजन न होई॥**

हनुमान् कथयति यत् - हे हरे ! यदा तव स्मरणं न भवति तदा अस्मादृशानां कृते संसारे महती विपत्तिः आगच्छति।

अकिञ्चनतावशात् संस्कृतेर्नाशो न भवति, किन्तु भोगविलासैः संस्कृतिनाशो भवत्येव। लङ्कायाः राक्षससंस्कृतिः दृष्टान्तरूपा वर्तते।





## १०३. सीताचरित्रं पञ्चलक्षणम्।

सीतायाः चरित्रं तीर्थजलसदृशं वर्तते। जलं स्वच्छं भवेत्, शीतलं भवेत् मधुरञ्च भवेत्, तथैव सीतायाः चरित्रमपि गुणयुक्तं, पवित्रं, स्वच्छं, निर्मलं वर्तते। परमात्मचरित्रं मधुरमपि गम्भीरमपि। सीतायाः चरित्रं पवित्रं वर्तते। सीतायाः चारित्र्यं मनोमलं हरति। जलं अगाधत्वं धारयति, तथैव सीतारामयोः चरित्रं गहनं, गम्भीरं च वर्तते। सीतायाः चरित्रं सुधामयं, अमृतमयं, तत्त्वमयं च वर्तते। अतः सीताचरित्रं स्वच्छं, शीतलं, मधुरं, गम्भीरं, सुधामयं चास्ति।

## १०४. रामकथासरित्।

नासिकस्थाने रामकथा प्रचलति। रामकथा स्वयमेव सरित्। रामकथा प्रवाहमयी वर्तते। रामतत्त्वमपि प्रवाहमयम्। नदी गतिशीला वर्तते। सा कदापि न बद्धा भवति। जलाशयो बद्धो, रुद्धो भवति। अत एव रामाय नद्यः प्रियाः। रामः वनवासकाले प्रथमरात्रौ तमसातटे व्यश्राम्यत्। यदा रामः श्रृङ्गबेरपुरम् अगच्छत् तदा तत्रापि गङ्गा आसीत्। ततः पश्चात् स यमुनायाः दर्शनम् अकरोत्। गोदावरीतटे पञ्चवटी वर्तते। तत्रैव रामः कञ्चित् कालम् अत्यवाहयत्। रामकथा भक्तिप्रवाहमयी , ज्ञानप्रवाहमयी वर्तते। अहं कदाचिन् मम तलगाजरडाग्रामस्य "रूपावा" नदीं पृच्छामि, 'त्वं कस्माद् धावसि ? अहं त्वां रामायणं श्रावयामि। किं त्वं समुद्रं मिलितुं गच्छसि ?' तदा नदी

मां प्रत्युत्तरति – "हे महाभाग ! अहं समुद्रं मिलितुं न धावामि, किन्तु धावनं, गमनं प्रतिक्षणं गमनमेव मम जीवनम् ।"

रामकथा रामप्रवाहयुक्ता सदैव निर्मला, पवित्रा, पतितपावनी च ।

**१०५. पञ्चलक्षणा नदी ।**

गोदावरी नदी पवित्रा, पतितपावनी । नदी पञ्चलक्षणा भवति । गोदावरी नद्यपि पञ्चलक्षणा वर्तते । नद्याः प्रथमं लक्षणं यत् – सा सदैव प्रवहन्ती, गतिशीला वर्तते । यदा नद्याः प्रवाहः प्रसरति तदा सर्वेऽपि गर्ताः पूरिता भवन्ति । अस्माकं जीवनमपि प्रवाहमयम् । ये ये परमेश्वरं प्राप्तुं प्रयत्नं कुर्वन्ति ते सर्वे अभावग्रस्तानां दलितानां, हीनानां अकिञ्चनानां, गर्तान् पूरयेयुः । गर्तपूरणानन्तरं पुनरपि गतिः कर्तव्या । नद्या द्वितीयं लक्षणं वर्तते यत् सा कमपि मार्गयति । नदी समुद्रं मार्गयति । वयमपि परमतत्त्वं मार्गयामः । नदी स्वतटयोः निर्माणं करोति, एतत् तस्याः तृतीयलक्षणम् । रामकथागङ्गा जनान् स्पृशति, वेदान्नपि स्पृशति । यदि भवन्तः वेदान् स्पृशन्ति किन्तु जनान् अश्पृश्यान् मन्यन्ते तर्हि भवन्तः न प्रवाहमयाः, भवन्तः रुद्धाः । समुद्रः अचलोऽस्ति । नदी स्वयमेव तटं निर्मिमाति ।

(अस्माभिः अस्माकं मर्यादायाः स्वयमेव निर्माणं कर्तव्यं, यया अस्माकं चरित्रं सुन्दरं भवेत् ।)





ये ये तटे वर्तन्ते तान् सर्वान् नदी हरितान् करोति । नद्या क्षेत्राणि हरितानि भवन्ति, वृक्षा हरिताः भवन्ति – इत्थं ये ये कथां श्रोतुम् आगच्छन्ति ते ते विचारेषु हरिता भवेयुः, नित्यनिर्मला भवेयुः, प्रफुल्ला भवेयुः ।

नदी कमपि अश्पृश्यं न मनुते । सा सर्वान् स्पृशति । सर्वैः स्पृश्या, एतत् तस्याः पञ्चमं लक्षणम् । रामकथा सर्वैरपि स्पृश्या , सर्वान् स्पृशति । नद्यां सर्वे स्नायन्ति , सर्वे सानन्दं निमज्जन्ति , सर्वे शुद्धाः भवन्ति । गोदावर्यामपि एतानि पञ्चलक्षणानि सन्ति ।

**१०६. 'अहं' 'ममेदम्' इति माया ।**

पञ्चवट्यां लक्ष्मणः पञ्चप्रश्नान् पृच्छति । भगवान् रामः ससुखं विराजते स्म । तदा लक्ष्मणः छलमुक्तान् प्रश्नान् अपृच्छत् । लक्ष्मणो जीवस्य सद्गुरुः अस्ति । स कदाचित् छलयुक्तं वदेत् ? पञ्चतत्त्वमयं शरीरमेव पञ्चवटी वर्तते । तत्र जीवनमयी गोदावरी प्रवहति । गोदावरीतटे रामानुभूतिं कर्तुं जीवरूपेण जीवाचार्यरूपेण वा लक्ष्मणः पञ्चप्रश्नान् अपृच्छत् । स प्रथमं प्रश्नम् अपृच्छत् यत् – 'माया' किमस्ति ?' इति तदा रामः अकथयत् ,

**मैं अरु मोर तोर तैं माया ।**

**जेहिं बस कीन्हे जीव निकाया ॥**

राम: अवदत्, 'हे लक्ष्मण ! माया अर्थात् 'अयम्', 'अहम्', 'इदम्', 'मम', 'ममत्वं', 'इदं तव' इति भेदकारकं तत्त्वं माया वर्तते। यदा अहङ्कारस्य नाशो भवति, ममत्वं नश्यति, भेदा: गलन्ति तदा तत्क्षणमेव जीवो मायामुक्तो भवति । माया द्विधा भवति - एका विद्या, अपरा अविद्या। विद्या नाम्नि माया यं मनुष्यं वशीभूतं करोति, स भगवत्कृपया त्रायते, किन्तु अविद्या यं स्ववशं करोति स भवकूपे निमज्जति।'

**१०७. अभिमानशून्यं ज्ञानम्।**

लक्ष्मणो द्वितीयं प्रश्नं पृच्छति यद् 'ज्ञानं किमस्तीति' तदा प्रभु: प्रत्युत्तरति 'यदा ज्ञानं भवति तदा अभिमानस्य नाशो भवति।'

**ग्यान मान जहँ एकउ नाहीं ।**

**देखत ब्रह्म समान सब माहीं ॥**

**(अत्र भगवद्गीताया: श्लोक: स्मर्यते – निर्मानमोहा जितसङ्गदोषा । अध्यात्मनित्या विनिवृत्तकामा: ॥ द्वन्द्वैर्विमुक्ता: सुखदु:खसंज्ञै: गच्छन्त्यमूढा: पदमव्ययं तत्॥(१५-१५)**

यदा ब्रह्मज्ञानं भवति तदा सर्वत्र सर्वस्मिन् सर्वदा ब्रह्मानुभवो भवति। सर्वत्र सुखे प्रसन्नतायां सति अहङ्काराभावो भवेत् तदा हरिदर्शनं भवति । हे भ्रातर:, हे भगिन्य:, ज्ञानस्य अहङ्कारोऽपि भवबन्धने क्षिपति। कामं शास्त्रज्ञानं न भवेद्। सम्यक् वक्तुमपि शक्तिर्न स्यात्। किन्तु अस्माभि: अभिमानं त्याज्यम्। ज्ञानम् अहङ्कारशून्यं वर्तते।



**१०८. सिद्धित्यागं वैराग्यम्।**

लक्ष्मणस्तृतीयं प्रश्नम् अपृच्छत् - "हे प्रभो ! वैराग्यं किमस्तीति ?" तदा भगवान् कथयति यत्

**कहिअ तात सो परम बिरागी ।**

**तृन सम सिद्धि तीनि गुन त्यागी ॥**

राम: अवदत् " हे लक्ष्मण ! यो मनुष्य: त्रीन् गुणान् तृणवत् क्षिपति अपि च साधनामार्गेण प्राप्ता: सर्वा: सिद्धी: तृणवत् क्षेप्तुं प्रभवति, स एव परम वैराग्यवान् अस्ति। य साधक: सर्वं त्यजति, स न जानाति यत् - मया किं कदा त्यक्तमीति। मानव: चञ्चल:। चाञ्चल्यम् अस्माकं स्वभाव:। किन्तु यदा कोऽपि ग्रामं गच्छन् तृणं स्पृशति तदा गृहं गत्वा किं स स्मरति यद् अहं तृणम् अस्पृशमिति। तथैव साधको न जानाति यन् मया कदा सत्त्वगुणो त्यक्त:, कदा रजोगुण: त्यक्त:, कदा वा तमोगुण इति।

**१०९. अज्ञानी जीव:।**

लक्ष्मण: चतुर्थं प्रश्नं पृच्छति यत् - "जीवशिवयो: को भेद: ?" इति। तदा प्रभु: कथयति यद् - 'य: वस्तुत्रयं न जानाति, स जीव:। जीव: स्वजीवत्वं न जानाति। संसारजालं न जानाति, जगदीशं च न जानाति। अत एव अज्ञानवशात् जीव: संसारे संसरति। सुखदु:खमोहानुभवं करोति।'

कर्मानुसारं यो जीवं बन्धनस्थं करोति, मुक्तेः अनुभवं कारयति, स परमसत्तात्मकः शिवः । यो मायां प्रेरयति स शिवः ।

**११०. कलियुगे नामस्मरणमहिमा ।**

लक्ष्मणः पञ्चमं प्रश्नं पृच्छति यद् "भक्तिः किं तत्त्वमस्ति ? अहं भक्तिं कथं जानामीति ? भक्तिः अर्थात् परमतत्त्वे परमानुरागः । भक्त्या सर्वबन्धनानि नश्यन्ति । रामः स्वयमेव प्रणवरूपः । यो रामनाम्नः जपं करोति । स प्रणवस्य जपमेव करोति । वाल्मीकिः लुण्ठाकः आसीत् । स रामस्य स्थाने "मरा मरा" इति जपति स्म । तथापि विपरितजपेनापि स शुद्धोऽभवत् । राममहामन्त्रबलेन शिवः कालकूटं पपौ । गणेशोऽपि लेखकः, तथापि लेखनेनैव परमपूज्योऽभवत् । अत एव कलियुगे नामस्मरणमहिमा वर्तते ।

**नहीं कलि करम न भगति बिबेक ।**

**रामनाम अवलंबन एकू ॥**

कलियुगे कदाचित् परमतत्त्वं प्राप्तुं मनुष्यः भक्तेः पारमार्थिकस्वरूपं न जानाति, भक्तेः साधनानि अपि न जानाति, किन्तु केवलं नामस्मरणं करोति, सोऽपि संसारपारं गच्छति ।

**१११. परमात्मनः कामना रसरूपा ।**

परमात्मनः कामना फलरूपेण न कर्तव्या, किन्तु रसरूपेण कर्तव्या । भगवद्दर्शनार्थं न मे कामना । यतोऽहं फलरूपेण न किञ्चित्





कामये । ईश्वरो रसरूपः । अत एव "रसो वै सः" इति श्रुतिवचनम् । भरतो निष्कामो वर्तते । कलियुगे कठिनतपश्चर्या नावश्यका । कठोरतपः कलियुगस्य प्रकृतिर्नास्ति । परमात्मा प्रेमसाध्यो भवेदिति मे मतिः, न तपस्साध्यः । तुलसीदासोऽपि मां समर्थयति –

**हरि व्यापक सर्वत्र समाना ।**

**प्रेम तें प्रगट होहिं मैं जाना ॥**

तुलसीदासस्य परमतत्त्वं प्रेम्णा आविर्भवति । तुलसीदासः रतिमपि रसं मन्यते । प्रेमतत्त्वमपि रसमयं वर्तते ।

कोऽपि गुरुर्यजमानं कथयति यत् "अहं भोजनं न करोमीति" तदा यजमानः कथयति – 'हे गुरो ! फलानि खादतु, इति । गुरुः पुनरपि कथयति अहं फलान्यपि न खादामीति । तदा यजमानः चिन्तितो भवति ।' स पृच्छति, 'हे भगवन् ! वयं भवतः सेवां कथं कुर्मः – कर्तुं शक्नुमः ।' तदा गुरुः सचातुर्यं वदति, "भवान् रसमेव ददातु ।" इति । फलेन सह फलत्वग् भवति, फले आम्रफलवत् बीजगुटिका भवति किन्तु रसे तु रस एव वर्तते । अत एव हे प्रियभक्ताः फलाकाङ्क्षां त्यजन्तु, हरिरसमेव पिबन्तु । नरसिंहमहेता कथयति –

**प्रेमरस पाने तुं मोरना पिच्छधर,**

**तत्त्वनुं टूंपणुं तुच्छ लागे ।**

(हे मयूरपिच्छधर ! , हे कृष्ण ! मां पायय प्रेमरसं, तत्त्वस्य पिष्टपेषणं, टिप्पणं तुच्छमस्ति ।)

### ११२. प्रियस्मरणं स्वयमेव भवति ।

केचिज्जनाः मां पृच्छन्ति – 'हे गुरुवर्य ! वयं कस्य स्मरणं करवाम ?' अहं प्रत्युत्तरे कथयामि – "यः कोऽपि प्रियो वर्तते तस्य स्मरणं स्वयमेव भवति । तस्य स्मरणं कर्तुं न कोऽपि प्रयत्नः आवश्यकः । प्रतिक्षणं प्रियस्य स्मरणं सायासं क्रियते, स न प्रियतमः । तुलसीदासो रामस्य स्मरणं करोति व्रजस्य गोप्यः कृष्णस्य स्मरणं प्रतिक्षणं कुर्वन्ति ।"

### ११३. गोदावरी औदार्यस्य पर्यायः ।

गोदावरीशब्दस्य अहं नवीनम् अर्थं करोमि । हिन्दीभाषायां 'गोद' अर्थात् 'अङ्कः', 'आवरी' अर्थात् 'आवृणोति' । या स्वस्य अङ्के सर्वमपि आवृणोति सा गोदावरी । गोदावरी स्वविशालप्रवाहे सर्वमपि वात्सल्येन स्वबाहुलतयोरावृणोति । गोदावरी मातृरूपा वर्तते । अत एव तुलसीदासः कथयति **सुरसुरि सरसइ दिनकर कन्या ।**

### ११४. मेकलसुता गोदावरि धन्या ॥

**अनुज समेत गए प्रभु तहवाँ ।**

**गोदावरि तट आश्रम जहवाँ ॥**





'सुरसरित्' अर्थात् गङ्गा । 'सरसइ' अर्थात् 'सरस्वती' । 'दिनकरकन्या' अर्थात् यमुना । 'मेकलसुता' अर्थात् 'रेवा' । अपि च गोदावरी एताः सर्वा धन्या नद्यः । गोदावरी वात्सल्येन मातृरूपा सा धन्या नदी, पुण्यसलीला नदी । भारतदेशोऽपि धन्यो यत्र एता नद्यः प्रवहन्ति । यत्र पतिव्रता नार्यः सन्ति । यो राजा न्यायात् न पदमपि परिचलति, सोऽपि धन्यः । नीतियुक्तब्राह्मणो धन्यः । यो धर्मं न परित्यजति, सोऽपि धन्यः । भगवान् शिवः कथयति, 'यः सत्सङ्गतिं करोति, यो हरिं भजति, सोऽपि धन्यः ।' **'गोदावरी' इन्द्रियप्रकाशकर्त्री ।**

गोदावरीशब्दस्य एको नूतनोऽर्थः । 'गो' अर्थात् इन्द्रियम् । 'दावरी' अर्थात् मराठीभाषायां प्रकाशः, किरणो वा । इत्थं गोदावरी अर्थात् या इन्द्रियाणि प्रकाशितानि करोति सा । अस्माकं इन्द्रियाणि अन्धकारे भ्रमन्ति । नासिकायै तामसो गन्धो रोचते । कर्णाभ्यां व्यङ्ग्यवचनानि, निन्दावाक्यानि, मलिनविचाराः रोचन्ते । अहं गौतमधर्मसूत्रं स्मरामि । तत्र एकं सुन्दरं सूत्रं वर्तते । '**अभयं भद्रं इति ब्रूयात् । अमङ्गलं मङ्गलमिति ब्रूयात् ।**' इदं ऋणीणां चिन्तनम् ।

यदि कर्णाभूषणं प्रभ्रश्येत्, तदा चिन्ता न कार्या, किन्तु कर्णयोर्विवेको भ्रश्येत् तदा चिन्ता कार्या । इत्थं इन्द्रियाणां श्रेयः चिन्तनीयम् ।

महाभारते इन्द्रः कर्णस्य कुण्डलाभ्यां सह कवचं गृह्णाति । कर्णस्य समीपे कुण्डले न स्तः । किन्तु कर्णौ स्तः । किन्तु कर्णः स्वयमेव संवेदनारहितः । कुन्ती कर्णस्य समीपे गत्वा यथार्थं कथयति, किन्तु कर्णः

श्रुत्वापि न शृणोति । भगवान् कृष्णः स्वयमेव कर्णं जागरयितुं प्रयत्नं करोति । किन्तु कर्णौ जागरितो न भवति । अत एव अहं कथयामि, 'इन्द्रियाणि मायायाः क्षेत्रे तमोमयं तृणं खादन्ति, तमसि यात्रां कुर्वन्ति किन्तु इन्द्रियाणां मोहो न गच्छति । गोदावरी इन्द्रियेभ्यः प्रकाशं ददाति । सूफीसाहित्यग्रन्थेषु 'दावरी' शब्दस्य अर्थः 'प्रकाश' भवति । '**तमसो मा ज्योतिर्गमय**' इत्यपि अस्माकं प्रार्थना । यः कोऽपि साधकः इन्द्रियेषु प्रकाशं अनुभवति स अनाहतं नादं श्रुणोति ।'

## ११५. गुरुवचननिष्ठा परमा साधना ।

यदि गुरुकृपा भवेत् तदा प्रतीन्द्रियं अनाहतनादस्य स्मरणं भवेत् । भवन्तः गुरोः उपासनां कथं करिष्यथ ? गुरुवचनेषु निष्ठैव गुरोः उपासना । कनकेश्वरी देवी भागवतकथाकारा । सा कथयति यद्, 'रामचरितमानसे पार्वत्यां स्थाननिष्ठा वर्तते, किन्तु वचननिष्ठा नास्ति । तुलसीदासः कथयति,

**'सद्गुरु बेद वचन विश्वासा ।'**

अर्थात् सद्गुरुवचनेषु वेदवचनेषु च सदैव विश्वासः कर्तव्यः । यदा सती देहत्यागं कृत्वा पार्वतीरूपा भवति तदा सा गुरुवचननिष्ठां प्राप्नोति । गुरुनिष्ठां विना सत्याः एकं जन्म निरर्थकं जातम् । यदा अस्माकम् अहङ्कारः विगलति तदा गुरुवचननिष्ठा प्राप्यते । तदा इन्द्रियेषु प्रकाशानुभवः, तदा अनाहतनादोऽपि श्रूयते ।'



## ११६. रामचरितमानसेऽपि केचित् कथातटाः ।

यथा गोदावर्या बहवस्तटा विविधस्थानेषु वर्तन्ते, तथैव रामचरितमानसेऽपि विविध-जलस्थानानां तटाः, तत्र तत्र विविधकथातटाः वर्तन्ते । 'सरयू' नदीतटे भगवतो रामस्य जन्मकथा वर्तते । यदा रामः सीतां परिणीय आगच्छत् तदा सरयूतटे अयोध्यायाः समृद्धिः अवर्धत । गङ्गातटे लक्ष्मणनिषादयोः कथा वर्तते । इत्थं मन्दाकिनीतटे भ्रातृभावस्य कथा वर्तते । लङ्कायां सरिद् वर्णनं नास्ति, किन्तु गोदावरीतटे शूर्पणखाया कथा प्रसिद्धाऽस्ति । गङ्गातटे निषादस्य मैत्र्यं वर्तते । सरयूतटे सीतारामयोः विहारो वर्तते । लङ्कायां नदी नास्ति । अतः केवलं संहारस्य कथा वर्तते । गोदावरीतटे शूर्पणखायाः रावणस्य भगिन्याः कथा वर्णिता अस्ति । गोदावरीतटे पञ्चकथा जाताः - रामगीता, शूर्पणखाकथानकम्, खर-दूषणयोः निर्वाणम्, मारीचवधः, अपि च पञ्चमी कथा वैदेह्याः अपहरणस्य कथा । शूर्पणखायाः वर्णनं गोस्वामिभिः कृतं यत् —

**शूर्पनखा रावन कै बहिनी । दुष्ट हृदय दारुन जस अहिनी ।**

**पंचवटी सो गइ एक बारा ।**

**देखि बिकल भइ जुगल कुमारा ॥**

रावणस्य भगिनी भयानकविषपूर्णा वर्तते । गोस्वामिनः गुप्तरूपेण 'भगिनीः' सङ्केतयति । शूर्पणखा एव रावणस्य सर्वनाशस्य निमित्तं भवति ।

शूर्पणखा दण्डकवने न्यवसत्। सा स्वच्छन्दं वने व्यहरत्। एकदा सा पञ्चवटीं आगच्छति। रामलक्ष्मणौ वीक्ष्य सा विह्वला भवति। अधुना सा तौ प्राप्तुं सुन्दरी रूपवती भवति । यथार्थतः शूर्पणखा दुष्टहृदया आसीत् । तथापि स्वहृदयं प्रच्छाद्य सा सुन्दरी भवति । सा रामं कथयति –

**'तुम्ह सम पुरुष न मो सम नारी'**

अर्थात् तव सदृशः न कोऽपि पुरुषः, मम सदृशी न कापि नारी।

रामकिंकरमहाराजः अत्र व्याख्यां करोति यत् शूर्पणखा सत्यरूपस्य रामस्य समक्षम् असत्यं वदति । अत एव सा दुष्टहृदया । शूर्पणखा कथयति यद् 'अहं कुमारिका अस्मि' किन्तु तस्याः पतिः पञ्चत्वं गतः । शूर्पणखा असत्यं वदति । अतः सा पराजिता भवति । यदा सा रावणस्य समीपे गच्छति तदा सा सत्यं वदति । शूर्पणखा रावणस्य सर्वाण्यपि दूषणानि वर्णयति । इत्थं रामस्य संसर्गात् शूर्पणखा अपि सत्यवादिनी भवति ।

मम मतानुसारं शूर्पणखा जीवस्य आसक्तिः अस्ति । आसक्तेः नखाः सततं वर्धन्ते। अतो नखच्छेदः समयानुसारं कर्तव्यः। शूर्पणखाया आसक्तेः एका समस्या वर्तते। सा सर्वत्र भ्रमति। आसक्तिः अपि जीवने शूर्पणखावत् प्रतिसमयं भ्रमति एव।



**११७. कलौ समाधानं गुरुकृपया हरिनाम्ना च ।**

कलियुगे समस्यानां सहस्रं वर्तते । प्रतियुगं, प्रतिकालं भिन्ना भिन्नाः समस्याः भवन्ति। तासां समाधानं प्रतियुगं देशकालानुरूपं भवति, किन्तु कलियुगे समस्यानां समाधानं गुरुकृपया भवति अथवा हरिनाम्ना भवति ।

महर्षिगौतमः तपः अकरोत् तदा अन्ये मुनयः शिवस्य समीपम् अगच्छन् । ते सर्वे गौतमस्य उग्रं तपोऽनुभूय भीताः । शिवः गौतमस्य समीपम् आगत्य दर्शनं ददौ। स अपृच्छत्, 'हे मुनिवर! किम् इच्छसि ?, किं ते प्रियं करोमीति ?' तदा गौतमः प्रत्यवदत्, 'हे प्रभो! दुर्भिक्षपीडिताः प्रजाः, सर्वे प्राणिनः त्रस्ताः । हे भगवन्! कृपां करोतु। शिवः एतावान् प्रसन्नः अभवत् यत् सः मस्तकम् आस्फालितवान्। स स्वजटां उन्मोच्य जलं मुमोच, तदा शिवजटाजूटात् यः पवित्रप्रवाहो मुक्तोऽभवत् स एव गोदावरी। गोदावर्याः कृते शस्त्रेषु 'वृद्धगोदा' इति शब्दः प्रसिद्धः । किं गोदावरी गङ्गाया अपि ज्यायसि वा वर्षीयसि ? वयं न जानीमः, किन्तु वामनपुराणे प्रसिद्धः श्लोकः वर्तते –

**कालिन्दी पश्चिमे पुण्या, गंगा चोत्तरवाहिनी,**

**विशेषदुर्लभाति गोदा दक्षिणवाहिनी ।**

## ११८. खरदूषणौ रागद्वेषौ ।

गोदावरीतटे खरदूषणयोः निर्वाणस्य घटना अभवत् । खरदूषणौ रागद्वेषौ वर्तेते । तयोः भगिन्यां शूर्पणखायां रागः । अपि च रामचन्द्रं प्रति द्वेषः । शूर्पणखा तयोः रागद्वेषौ उदपादयत् । खरदूषणौ निशाचरसेनाम् आनीय पञ्चवटीम् आगच्छताम् । तौ स्वमन्त्रिणं दूतरूपेण प्रेषितवन्तौ । मन्त्री राममवदत् , 'भवान्, सुन्दरनारीं ददातु' तदा रामो लक्ष्मणम् आज्ञापयामास यद् भवान् सीतया सह गिरिकन्दरां गच्छत्विति । यदा रागद्वेषयोः आक्रमणं भवति तदा विविक्तं गच्छतु । एकान्ते रागद्वेषौ न भवतः ।

## ११९. अष्टधा शुद्धिः सिद्धिः । नवधा भक्तिः निधिः ।

जनाः मां पृच्छन्ति, ''बापुमहाभाग ! हनुमानचालीसास्तोत्रपाठे लिखितमस्ति – **अष्टसिद्धि नौ निधि के दाता**'' अर्थात् हनुमान् अष्टसिद्धीः, नवनिधीः ददाति किन्तु वयं नित्यं पाठं कुर्मः तथापि अस्माभिर्न किञ्चिल्लब्धम् । इति । अहं मन्ये यत् हनुमानचालीसास्तोत्रपाठः अष्टसिद्धिगणं ददाति । मनसः शुद्धिः, वचसि शुद्धिः, शरीरशुद्धिः, कर्मशुद्धिः, आजीविकाशुद्धिः । बुद्धेः शुद्धिः, हृदयस्य शुद्धिः अपि च आत्मनः शुद्धिः – इत्थं अष्टशुद्धिलाभो भवति । अहं कथयामि यत् मम कथां श्रुत्वा कस्यापि लाभस्य आशा त्याज्या । महत्तमो लाभो जातः, यन्मनुष्यदेहः पृथिव्यां प्राप्तः, तस्मादपि विशेषो लाभो । भारते जन्म प्राप्तमिति अहं





पुनरपि कथयामि यत् कथया फलं न प्राप्स्यति भवान् , किन्तु रसं तु प्राप्स्यत्येव ।

व्यवहारदृष्ट्या अस्माभिः गोदावरीदर्शनं न कृतम् । यन्न परिवर्तनं प्राप्नोति तदेव तत्त्वमस्ति । यो वर्धते अपक्षीयते , असौ भावोऽस्ति । तुलसीदासैः लिखितम् **— हिमगिरि कोटि अचल रघुबीरा ।** रामतत्त्वं कोटिकैलाशकल्पसदृशं स्थिरमचलं वर्तते ।

## १२०. स्नेहस्त्रिधा ।

व्यावहारिकदृष्ट्या अस्माभिः गोदावरीदर्शनं कृतम् । वयम् अपि जगति त्रिप्रकारेण त्रिविधं स्नेहं कुर्मः । यदा कोऽपि मिलति तदा वयं कथयामः, 'अये वयस्य ! बहुदिवसेभ्यो मेलनं जातम् ।' अयं व्यावहारिकः स्नेहः । भावनात्मके स्नेहे वृद्धिक्षयौ भवतः । कदाचित् त्वं कमपि स्मृत्वा रोदिषि , कदाचित् रोदनं न करोषि एव, कदाचित् स्मृतिः आनन्ददात्री भवति । कदाचित् दुःखदा भवति । रामायणे तृतीयस्नेहस्य महिमा वर्तते । असौ तात्त्विकस्नेहः । रामः सीतायै यदा सन्देशं प्रेषयति तदा स कथयति , 'अहं न व्यावहारिकप्रणयसन्देशं प्रेषयामि , अहं तत्त्वप्रेम निवेदयामि ।''

**तत्त्व प्रेम कर मम अरु तोरा ।**

**जानत प्रिया एकु मनु मोरा ॥**

राम: कथयति , 'हे जानकि ! आवयो: स्नेह: तत्त्वस्नेह: वर्तते । यं हृदयमेव जानाति । (भवभूति: कथयति यत् 'हृदयमेव जानाति प्रीतियोगं परस्परम् ।')

भगवान् राम: कथयति, 'आवयो: मन: एकमेवास्तीति । साधको लिखन्ति यत् वेदेषु कृष्णान्वेषणं कृतं, किन्तु कृष्णो न प्राप्त: । कृष्ण: शास्त्रेषु न प्राप्त: , तीर्थेषु न प्राप्त: , किन्तु यदा वयं वृन्दावनकुञ्जं गतवन्त: तदा तत्र राधिका अस्वपत् , कृष्णो राधाया: चरणौ संवाहयति स्म । यदा सख्य: राधां पृच्छति , 'अपि कुशलिनी त्वम् ?' तदा राधा कथयति यत् 'कृष्णस्य या कापि चेष्टा , सा मह्यं सुखं ददातीति ।' तर्हि गोदावरीदर्शनं किम् अस्ति ? अहं मन्ये यत् यावत् प्रभृति रामो गोदावरीतटं नागच्छत् तावत् प्रभृति गोदावरीप्रदेशेषु मुनय: सन्तप्ता: आसन्, किन्तु रामस्य आगमनेन सह गोदावर्या: सर्वे सन्तापा नष्टा: ।''

## १२१. गोदावरी तत्त्वदात्री ।

यत् तत्त्वं वयं अन्वेषयाम: , तत् तत्त्वं गोदावरी सूचयति । रामस्य आगमनादेव गोदावर्या: उग्रस्वभावो नष्ट: । सा पुण्यसलिला जाता । गोदावर्या: सर्वे शापा: सन्तापा नष्टा: । गोदावरीतटे ऋषय: मुनय: सर्वे स्वसाधनारता: अभवन् । यदा ईश्वरस्य सान्निध्यं भवति तदा सर्वेषां सन्तापा नश्यन्ति । इदं द्वितीयं तात्त्विकं दर्शनम् । गोदावरीतटे राम: स्वयमेव रामगीताम् अगायत् । रामो लक्ष्मणाय उपदेशमददात् । असौ 'रामगीता' इति कथ्यते ।





गोदावर्या: तात्त्विक: सन्देशोऽस्ति यत् 'यूयं स्वर्गकामनां त्यजतेति । गोदावर्या तटे शूर्पणखाया: नासिकाकर्णं छिन्नम् । गोदावर्या: प्रवाहस्य तत्त्वमस्ति , 'निर्वाणम्' । अत्र चतुर्दशसहस्राणां राक्षसानां निर्वाणम् अभवत् । अत: गोदावरीप्रवाहो निर्वाणदायक: । अन्या नद्य: पूरप्लाविता भूत्वा विनाशं कुर्वन्ति किन्तु गोदावरी विनाशकारिणी नदी नास्ति । गोदावरी सुमतिदात्री वर्तते । शूर्पणखा कुमतिरासीत् किन्तु गोदावरीप्रभावात् शूर्पणखायां सुमतिर्जनिं लेभे । अत: सा रावणसभायां हितोपदेशं जगाद ।

## १२२. परमात्मा प्रियतम: , मारीच: प्रणयी ।

मम मतानुसारं मारीचो मनुष्यजीवो वर्तते । परमात्मा प्रियतम:, मारीच: तस्य प्रणयी वर्तते । मारीच: रावणम् अनर्थात् त्रातुं प्रयतते किन्तु रावणस्य शाठ्यं तस्य वचनानि न शृणोति । रावण: मारीचं कथयति यद् , 'यदि त्वं मया सह मृगरूपं धृत्वा न आगमिष्यसि तर्हि त्वां व्यापादयिष्यामीति । मारीच: विचारयति यद् , 'यदि अहं निषेधं करिष्यामि तर्हि रावणो मां हनिष्यति । किन्तु तत्र गमिष्यामि तदा रामो मां हनिष्यति । रामहस्तादेव मरणं मे वरमिति । इत्थं मारीचो निर्वाणमप्राप्नोत् । अत: अहं कथयामि मारीच: प्रणयी भूत्वा स्वदेहे त्यक्तुं परमात्मन: समीपे अगच्छत् । दुष्टजीवानां कृतेऽपि परमात्मा प्रियतमोऽस्ति ।

## १२३. धर्मो गृहद्वारम् ।

समाजे विश्वस्मिन्नपि विश्वे नैके जना: स्वच्छन्दतया सम्प्रदायान्

स्थापयन्ति , बहुभिः स्थापिता नवाः पन्थानः । तुलसीदासः उदारमहात्मा अस्ति । अत एव तुलसीदासस्य उपदेशो न कोऽपि धर्मः , न कोऽपि सम्प्रदायः , न कोऽपि पन्था वा । एकेन महात्मना कथितं यद् , ''अस्माकं धाराः वर्तन्ते । धारा सङ्कीर्णा लघ्वी भवेत् । यदा कापि महाधारा प्राप्यते तदा वयम् अस्माकं धारायाः तया सह सङ्गमं मेलापं वा कुर्मः । यतः सागरं गन्तुं सुकरं भवेत् । अहं मन्ये यद् , ''अस्माकं सङ्कीर्णविचारधारायाः तथाकथितधर्मधाराणाञ्च सनातनधर्मस्य प्रवाहधारया मेलनं भवेत् तदा क्षीरसिन्धुसुप्तः विष्णुः नेदिष्ठो लक्ष्येत ।''

युष्माकं गृहाणां भित्तयः सन्ति, किन्तु ता भित्तयः कारागृहभित्तिसदृश्यो न सन्ति । गृहस्य भित्तयो निर्बलाः सन्ति तथापि वयं सानन्दं जीवामः । कारागृहस्य भित्तयो बलवत्यः किन्तु तत्र हर्षो नास्ति । कारागृहस्यापि द्वारं वर्तते । गृहस्यापि द्वारं वर्तते । किन्तु गृहस्य द्वारं बहिर्वा अन्तर्वा पिहितं वा अपिहितं भवति किन्तु कारागृहस्य द्वारं केवलं बहिः पिहितं भवति । न कोऽपि कारागृहं गत्वा द्वारम् अन्तःपिहितं करोति । अत एव कारागृहाद् बहिः गमनं न शक्यम् । धर्मो गृहद्वारसदृशो भवेत् । यदा कोऽपि बहिर्गन्तुमिच्छति तदा स स्वयमेव द्वारमुद्घाटयेत् । किन्तु सम्प्रदायैः वयं कारागृहवासिनः कृताः ।

## १२४. रामकथा जीवशुश्रूषा ।

कोऽपि नास्तिकः श्रोता मां कथयति , ''बापुमहाभाग ! अहं रामे न श्रद्धामि तथापि अहं रामकथां शृणोमि । कथा मे रोचते । मम प्रसन्नता





वर्धते किन्तु मूलतोऽहं नास्तिक इति ।'' अहं नास्तिकश्रोतुः स्वागतं करोमि । त्वं रामे स्निह्यसि वा न तेन सह मम कथायाः नास्ति सम्बन्धः । त्वं रामे न स्निह्यसि, मनसि नास्तिकोऽसि तथापि रामकथायां तव रुचिरस्ति तस्मिन्नेव मम प्रसन्नता वर्तते । त्वं चिकित्सकस्य समीपे गच्छसि अपि च कथयसि यत् 'अहं एलोपथिचिकित्सायां न विश्वसिमीति तदा चिकित्सकः त्वां कथयिष्यति , 'त्वं मन्यसे वा न तेन सह मम नास्ति सम्बन्धः । त्वं मम चिकित्सया स्वस्थो भवेति । एवं हि संसारदुःखरोगं नाशयितुं रामकथा जीवशुश्रूषा वर्तते । भवान् मन्यते वा न, भवान् यस्य कस्यापि धर्मस्य अनुयायी भवेत् । यदि भवान् कथाप्रवाहे निमज्जनं कृत्वा परमानन्दं लभते तदा उपचारो मे सफलः ।

**सद्गुरु बैद बचन बिस्वासा ।**

**संजम यह न बिषय के आसा ॥**

यदि मनसि निरामयत्वं प्राप्यते तदा स्वीकारस्य अस्वीकारस्य वा न कोऽपि प्रश्नः । वैद्यः केवलं भवतः स्वास्थ्यमेव इच्छति । यदा ज्वरः अपगच्छति तदा क्षुधा वर्धते । (ज्ञानेच्छा वर्धते ।)

## १२५. सनातनधर्मसरलतरलाधारा गोदावरी ।

केवलं कथाश्रवणमेव सत्सङ्गतिः नास्ति । सत्सङ्गतिः असङ्कीर्णा, असीमिता भवेत् । भवान् यदा कामपि गीतिं श्रुणुयात्, अपि च तच्छ्रुत्वा

मनः प्रसन्नं भवेत् तदा सत्सङ्गः जातः । कथा केवलं पुण्यं प्राप्तुं न श्रुणुत। स्वर्गस्य कृते भिक्षां मा याचध्वम्। वाणीप्रकाशनस्य एकं पुस्तकम् अस्ति। तस्मिन् ग्रन्थे आङ्ग्लभाषायां विचारशतकस्य हिन्दीभाषायामनुवादो वर्तते । तस्मिन् ग्रन्थे एका कथा वर्तते । केनापि पाश्चात्यविदुषा एकम् औषधं प्राप्तम् । तेन औषधेन प्रसन्नताप्राप्तिर्भवति स्म । यदि कोऽपि औषधसेवनेन सुरासेवनवन् मदमत्तो भवेत् तदा सा स्थितिः नास्ति न विपश्यना, नास्ति वा समाधिः । मम मतानुसारं गोदावरी स्वयमेव सनातनधर्मस्य सरलातरलाप्रवाहिता धारा वर्तते । यावत् पर्यन्तं धारा प्रवाहिता भवति तावत् पर्यन्तं सा चैतन्ययुक्ता भवति। अस्माभिः धर्मस्य जाड्यं, धर्मस्य कटुता त्यक्त्वा सनातनधर्मे विश्वासः कर्तव्यः ।

## १२६. वटो विश्वासप्रतीकम्।

रामचरितमानसे वर्णितमस्ति यत् कैलाशपर्वतः उच्चतमो वर्तते। श्रद्धाजगति कैलाशाद् उच्चतरं न किञ्चिदस्ति । तत्रापि वटवृक्षो वर्तते वेदप्रसिद्धस्य कैलाशवटवृक्षस्य तले भगवान् शिवः स्वयं रामकथां कथयति । प्रयागराजे तीर्थराजे 'अक्षयवटो' नाम वटो वर्तते । तस्य छायायां निरन्तरं रामकथा प्रचलति । कैलाशस्य वटो विश्वासस्य वटो वर्तते । शृंगबेरपुरेऽपि वटो वर्तते । गङ्गातटे वटवृक्षतले भगवान् रामो विश्रामं चक्रे। तस्माद् वटात् क्षीरं गृहीत्वा प्रभुः स्वजटाबन्धनं चकार। चित्रकूटेऽपि वटो वर्तते। पञ्चवट्यां गोदावरीतटे वटवृक्षो वर्तते। स्वयं भुशुण्डिमहाभागो वटवृक्षतले कथां करोति। इत्थं यानि यानि स्थानानि वर्तन्ते, तत्र तत्र वटवृक्षाः सन्ति । वटः विश्वासस्य प्रतीकम् अस्ति , स्थैर्यस्य प्रतीकं वर्तते। यत्र संशयोऽस्ति , सन्देहो वर्तते तत्र कथा न प्रवर्तते किन्तु व्यथा वर्धते । वटवृक्षस्तु अचलः, स्थिरः सुदृढः । अक्षयवटस्य तात्पर्यम् अस्ति यद् यस्य क्षयो न भवति असौ अक्षयवटः। आङ्ग्लशासकाः इर्ष्यापूर्वकं वटं नाशयितुं अम्लद्रवं (Acid) अक्षिपन् , ते कुम्भमेलापके हिन्दुजनसम्मर्दं वीक्ष्य इर्ष्याम् अकुर्वन्। किन्तु अक्षयवटः पुनरपि अङ्कुरितो भूत्वा वृक्षोऽभवत् । अत एव अहं कथयामि यद् वटः विश्वासस्य प्रतीकम्। साधकोऽपि वटवृक्षो भूत्वा स्थिरो भूत्वा परमात्मनः उपासनां कुर्यात्।

**( मानस-पञ्चवटी : जोहनसबर्गः ७-७-१२ तः १५-७-२०१२ पर्यन्तं प्रचलितायाः रामकथायाः सूत्राणि ।)**

## १२७. गुरुः पुरोहितोऽपटिकादूरीकर्ता।

अत्र जोहनबर्गस्थाने अद्य दक्षिणआफ्रिकादेशे अहं कथायाः प्रारम्भं करोमि। अस्य कथाया विषयः 'मानसपञ्चवटी' वर्तते। यदा मनुष्यसमीपे धनम् आगच्छति तदा स धनी भवति, यदा स ज्ञानं प्राप्नोति तदा स ज्ञानी भवति, यदा स बलम् आप्नोति तदा स बलवान् भवति, तथैव यदा स सत्यं प्राप्नोति तदा सत्यनिष्ठो भवति । गुरुः प्रभुरस्ति । प्रभुः अर्थात् प्रभुविष्णुः, शिवः। अत एव गुरुः शिवस्वरूपः, कल्याणप्रदः। राजस्थाने भगवतः श्रीनाथजीप्रभोर्मन्दिरं वर्तते। तत्र यदा पुरोहितः अपटिकां दूरीकरोति,

तदा प्रभोः दर्शनं भवति । महाप्रभुः अन्तर्विराजते, किन्तु मध्ये अपटिकामयमावरणम्-आच्छादनं-भवति । यदा पुरोहितः आवरणं दूरीकरोति तदा त्रिगुणातीतस्य प्रभोः दर्शनं भवति । अतः पुरोहितः मायायाः आच्छादनानि दूरीकृत्वा परमात्मनः दर्शनं कारयति । ग्रन्थोऽपि सद्‌गुरुः वर्तते । यो ग्रन्थः मायामपहरति स सद्‌गुरुः भवति । यदाहं कमपि ग्रन्थं पश्यामि, कमपि सुन्दरं लेखं वाचयामि, कवितां शृणोमि, गीतस्य रसास्वादं करोमि , गझलस्य पङ्क्तिं कथयामि, शृणोमि वा तदा तत्र तत्र गुरुः प्रत्यक्षं भवति ।

## १२८. गुरुः परमहितकारकः ।

गुरुः कदाचित् क्रुद्धः भवति, कदाचित् प्रसन्नो भवति, कदाचित् उपालम्भं ददाति, किन्तु स सर्वथा श्रेयः करोति । एकां कथां श्रावयामि, 'एकश्चित्रकार आसीत् । एकदा स चन्द्रशालायां चित्रमालिखति स्म । चित्रमालिखन् स तन्मयो जातः । स दूरं गत्वा वारं वारं चित्रं विलोकयति स्म । चित्रं दूरतः कीदृशं लक्ष्यत इति चिन्तयन् स असावधानतया चन्द्रशालापर्यन्ते अगच्छत् तदा तस्य एकः सुहृद् आगच्छत् । यदि चित्रकारः पदमपि पृष्ठे गच्छेत् तर्हि तस्य नीचैः पतनं निश्चितम् आसीत् । अतः तं त्रातुं तेन मित्रेण शीघ्रमेव तस्य वर्णसङ्घातद्रवः चित्रे निक्षिप्तः । अतः चित्रं नष्टम् । चित्रकारो रुष्टो भूत्वा तं प्रहर्तुम् उद्यतः, तदा सुहृद् अवदत् , ''मित्र ! त्वां त्रातुमेव मया तव चित्रं दूषितम् । इत्थं अस्माभिः कृताः कल्पनाः गुरुर्विवर्णयति । किन्तु गुरुः अस्मान् त्रातुमेव अस्माकं





क्षणभङ्गुरस्वप्नानां नाशं करोति । अहं वारं वारं कथयामि यद्, 'गुरोः समक्षं याच्ञां मा कुरु । यदा त्वं याचसे तदा त्वं गुरोः अधिकं जानासि इत्यर्थो भवति । गुरुः सर्वमपि जानाति, अतः फलस्य काङ्क्षां मा कुरु । गुरुः स्वयं गौरी, स एव गङ्गा, स एव गोः, स एव पृथ्वी - इति मे मति । लाओत्से-महाभागः चीनदेशस्य दार्शनिक आसीत् । स अकथयद्, 'यदि त्वं किञ्चिद् अन्वेष्टुं गच्छसि तदा त्वमेव तत् प्रभ्रष्टं करिष्यसि । वयं यद् अन्वेष्टुं प्रयतामहे तदेव वयं प्रभ्रष्टं करिष्यामः । अत एव उपनिषत् कथयति - तद् दूरे तद् अन्तिक इति ।'

## १२९. ईश्वरः सम्मुखः ।

भवतो गृहं लघुकम् , भवतः परिवारः पञ्चवटी । यदा पञ्चवटानां समुदायः भवति, तदैव पञ्चवटी भवति । अतः परस्परं स्खलनम् अन्वेष्टुं मा प्रयतताम् । ईश्वरः सम्मुखो वर्तते । तमेव स्वात्मनि अनुभवतु । स्नेहः तनीयान् भवति । स्खलनानि स्थविष्ठानि, अतः अन्येषां स्खलनानि विस्मर्तुं प्रयतताम् । स्वस्खलनानि क्षन्तुं केवलं परमेश्वरः प्रभवति । केवलं सर्वत्र करुणामयस्य ईश्वरस्य दर्शनं करोतु ।

## १३०. आनन्दो नः स्वरूपम् । आनन्दो नो धर्मः ।

मानवजीवने असङ्ख्या प्रश्ना न भवेयुः, किन्तु वयमेव स्वयं प्रश्नानां निर्माणं कुर्मः । समस्या न सन्ति बहुलाः, किन्तु वयमेव समस्यां जनयामः । यदि भवान् सानन्दं जीवति तदापि प्रश्ना भविष्यन्ति । यदि

मनस्तानवमनुभूय जीवति, तदापि प्रश्ना भविष्यन्ति एव । अत एव वर्तमाने सानन्दं जीवतु, इति व्यासपीठस्य मध्ममो मार्गः । अयं मार्गो भगवतो बुद्धस्य मार्गः । वयं सानन्दं जीवनस्य अधिकारिणः - आनन्दस्य दायादाः, वयं आनन्दरूपाः, आनन्दो नो धर्मः । हिन्दुधर्मस्य अस्माकं कृते गौरवं भवेत् । इस्लामधर्मस्य गौरवम् इस्लामधर्मिणां कृते भवेत् । बङ्गभाषायां कथ्यते, ''**आनन्द आमार गोत्र, उत्सव आमार जाति ।**'' अर्थात् आनन्दो नो गोत्रं, उत्सवो नो जातिः । सर्वस्य यत् किमपि गोत्रं भवेत् किन्तु आनन्दः सर्वस्य गोत्रम् ।

एकदा अहं जेरुसलेमदेशे रामकथार्थं गतवान् । तस्मात् स्थानान् महम्मदपयगम्बरेण स्वर्गारोहणं कृतमिति मन्यन्ते जनाः । अहं मस्जिदं गतवान् । मार्गान्तराले एकः सद्गृहस्थः अतिष्ठत् । स माम् अपृच्छत्, ''भवान् कस्य धर्मस्य ? अपि भवान् मुस्लिमः ?'' इति । मया कथितम् , ''अहं हिन्दुः मनुष्यः । केवलं हिन्दुधर्मो मे धर्मः । किन्तु वयं सर्वे मानवाः स्मः । मम कृते नास्ति गोत्रं, नास्ति जातिः । सम्प्रदाया भिन्नाः भवन्ति, किन्तु धर्मः एक एवास्ति । सम्प्रदायशाखासु परिचयाः लुप्ताः । मनुष्यत्वं प्रभ्रष्टं जातम् ।''

### **१३१. असत्याद् भयम् ।**

कोऽपि माम् अपृच्छत् , ''अपि भवान् मृत्योर्बिभेति वा ?'' अहं सत्यं कथयामि यत् , ''कस्मादपि न बिभेमि । भीषणपरिस्थितिषु भयावहस्थितिषु माम् एकाकिनं त्यजतु । न भेत्स्यामि कदापि । एषा आत्मश्लाघा नास्ति । मम समीपे रामनाम्नो बलं वर्तते, गुरुकथाया बलं वर्तते । केचित् जनाः क्षणे क्षणे बिभ्यति ।'' (शेक्सपियरः कथयति यत् ''कापुरुष मृत्योः पूर्वं नैकवारं म्रियते ।'') स्वामीशरणानन्दः अवदत् , ''यः केवलं अन्येषां कृते जीवति, समाजाय जीवति, सर्वजीवेभ्यः जीवति स न बिभेति ।'' शरणानन्दमहाभागः अकथयत् यत् , ''यः असन्नमार्गेण जीवति, असत्यं कृत्वा जीवति तस्य मरणाद् भयं वर्तते । ये सत्सङ्गतौ जीवन्ति, ते न बिभ्यति ।'' अत एव महापुरुषाणां ग्रन्थान् पठन्तु । कवीनां काव्यानि वाचयन्तु ।

### **१३२. पितरौ पूर्वदिक् ।**

अहं युवकान् कथयामि यत् , ''वयं यत्र-कुत्रापि गच्छामः तत्र अस्माभिः सह दिशोऽपि चलन्ति । यदि भवान् पश्चिमां दिशं गच्छति तदा पूर्वा दिक् पृष्ठे चलति, यदि उत्तरस्यां दिशि भवतो गमनं भवति तदा दक्षिणा भवन्तं अनुसरति । यदि भवान् गगनं गच्छति तदा पृष्ठे पृथ्वी अनुधावति ।'' अहं सदैव कथयामि यद् , ''अस्माकं पितरौ पूर्वदिक् वर्तते । तुलसीदासाः प्रमाणयति मे वाक्यम् , **बंदऊँ कौशल्या दिशि प्राची ।** कौशल्या माता पूर्व दिक् वर्तते, यस्या रामचन्द्रस्य उदयो भवति । अतः पितरौ न पूर्वा दिक् , यतः सूर्योदयो भवति । पत्नी पश्चिमा दिक् यत्र सूर्योऽस्तं गच्छति । पश्चिमायां दिशि सर्ववस्तूनाम् अस्तो भवति । आचार्याः, अध्यापकाः अस्माकं दक्षिणा दिक् । शङ्कराचार्य-रामानुजाचार्य-मध्वाचार्य-निम्बकाचार्याः - एते सर्वे दक्षिणभारते

अवतीर्णाः सन्ति । उत्तरस्यां दिशि भगवतो भगवतः अवताराः जनिं लेभिरे। रामकृष्णबुद्धादयः सर्वे उत्तरस्यादिश आगताः।" अहं कथयामि यत् , "अस्माकं मित्रवर्गः, अस्माकं उत्तरा दिक् वर्तते । यदा जीवने समाधानं न प्राप्यते तदा मनुष्यो मित्रस्य स्कन्धे मस्तकं निधाय रोदिति। कृष्णः अर्जुनस्य सखा वर्तते। अत एव स सारथिर्भवति। यदि कृष्णः गुरुः स्यात् तदा स रथं न चालयेत्। गुरू रथे तिष्ठति किन्तु शिष्यः सारथिर्भूत्वा रथं चालयति।" अत एव अहं कथयामि यत्, "अस्माकं वयस्याः उत्तरा दिक् वर्तते। इति।"

धर्मपत्नी पश्चिमा दिक्। अत एव सा धर्मकार्ये पृष्ठे भवति। सा सदैव पतिं समर्थयति। पूर्वदिशि धर्मो भवति किन्तु पश्चिमा दिक् सदैव धर्मं समर्थयति। इत्थं चतुर्भिः दिग्भिः वयं रक्षिताः स्मः।

**१३३. अनहङ्काररूपो वटः।**

वटवृक्षः सदैव हरितः। शिशिरतौ तस्य पर्णानि भवन्त्येव। वटवृक्षः अहङ्काररहितः। यो जनः अहङ्काररहितः, स सदैव प्रसन्नो भवति, हरितो भवति। अहङ्कारो मनुष्यं शोषयति। अहङ्कारेण मनुष्यः स्वयमेव शुष्यति। वटवृक्षः कति कति विहगानाम् आश्रयोऽस्ति ! तस्य प्रतिशाखं नीडाः भवन्ति। तथापि खगभारे सत्यपि वटवृक्षः सदैव अचलः, स्थिरः। न भारातिशयात् कदापि नमत्यसौ। तस्य लघुकेषु फलेषु अनेकानि बीजानि भवन्ति। अतो वटवृक्षः स्वयमेव प्ररोहति। अत एव युगान्ते स्वयं भगवान् वटवृक्षस्य पत्रस्य पुटे शेते। यथा –

**वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि।**





**करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम्॥**

अत एव अस्माकं मातरो भगिन्यश्च वटसावित्रीव्रतं कुर्वन्ति।

अहङ्कारो महाभयावहः शत्रुः। तस्य चत्वारः पुत्राः सन्ति। दम्भः, आडम्बरः, पाषण्डः, बकव्रतं च। कोऽपि कथयति , "अस्य महात्मा द्विशतवर्षीयोऽस्ति, तथापि असौ महात्मा स्मयमान आस्ते।" कोऽपि कथयति यद् "अस्माकं गुरुर्विमानं विना स्वयमेव गगने डयते, तथापि गुरुर्मौनभावेन तिष्ठति।" एतत् सर्वं दम्भवशात् भवति।

यदा न रुद्यते तथापि रोदनस्य नाटकं क्रियते तदा बकवृत्तिरस्ति। पाषण्डस्य सृष्टिश्चमत्काराणां सृष्टिः। सहस्ररूप्यकाणां द्विसहस्रश्चरूप्यकाणि कर्तुं व्यवसायः पाषण्डः। पित्तलस्य सुवर्णं कर्तुं नाटकं पाषण्डः। महापुरुषाणां रहस्यं ज्ञातुं दुष्करम् अस्ति। तुलसीदासैः कथितम् — **पाखंडी हरि मुख विमुख**

**जहां नहीं जूठ न कहीं सच।**

बुद्धिपूर्वकं स्वप्रभावम् उत्पादयितुं या व्यवस्था स आडम्बरोऽस्ति। अस्माकं भाषायां "मेघाडम्बरः" इति शब्दो वर्तते। यदा जलदा नभसि छन्ना भवति, किन्तु मेघस्य बिन्दुरपि न पतति तदा मेघाडम्बरः कथ्यते। अतो वटवृक्षसदृशा विशालाः, उदारचरिताः अनहङ्कारा भवन्ति। अस्माकं चारित्र्यमपि वटसदृशं भवेत्। अन्येषां कृते अस्माकं चारित्र्यं छायारूपं भवेत्।

**१३४. पञ्चलक्षणो वक्ता।**

भगवान् रामः पञ्चवट्यां लक्ष्मणस्य जिज्ञासां शमयितुम्

उपदिशति । स कथयति, "हे लक्ष्मण ! मनसा, बुद्ध्या, चित्तेन श्रुणु । किन्तु अन्तःकरणैर्न श्रुणु, यतः अन्तःकरणे अहङ्कारः समाविष्टो भवति । अत एव विकल्पमुक्तो भूत्वा मनसा श्रुणु । चित्तवृत्तेर्निरोधः कृत्वा ध्यानावस्थायां बुद्ध्या शृणु । व्यभिचारिणीं बुद्धिं विहाय शृणु । अतः श्रोतारो मनसा, बुद्ध्या चित्तेन च कथां शृण्वन्ति तदा सा पुण्यदायका भवति ।"

ये सफला वक्तारः सन्ति, तेषु कागभुषुण्डिमहाराजः, तुलसीदासः, शुकदेवः, याज्ञवल्क्यः – इत्यादयः सर्वे सन्ति । यथा माता बालकं दुग्धं पाययति तथैव वक्ता श्रोतारं ज्ञानामृतं पाययति । वक्ता मातृवत् **स्नेहात्मकः** भवेत् ।

स **सूत्रात्मको** भवेत् । तस्य एकं वाक्यं प्रबन्धायते । स शास्त्रात्मको भवेत् । तस्य वाचि सदैव शास्त्राणां ज्ञानं प्रकटितं भवति । वक्ता शास्त्रसङ्गतं ब्रवीति तदैव स प्रमाणभूतो भवति । वक्ता **स्वानुभवात्मको** भवेत् । अनुभवरहितं ज्ञानं निरर्थकम् ।

वक्ता **सत्यात्मको** भवेत् । (अत एव ऋषिः कथयति , "ऋतं वच्मि, सत्यं वच्मि ।") यदा वक्ता कथयति तदा अहङ्कारं दूरं क्षिप्त्वा शृण्वन्तु । कुशलो वक्ता स्वयं तरति, अन्यान् तारयति ।

**१३५. समित्पाणिः गच्छेत् – न रिक्तपाणिः ।**

ऋषिर्मन्त्रस्रष्टा नास्ति, किन्तु मन्त्रदृष्टा वर्तते । यथा वेदे तदा पुराणग्रन्थेष्वपि परमात्मनः ज्ञानम् आकाशादवतरति । ऋषिर्मन्त्रान् पश्यति, धारयति, मन्त्रसाधनां करोति, अनुभवति । जगत्कल्याणार्थम् अधिकारिणे





शिष्याय ज्ञानं ददाति । मन्त्रः सदैव परमहितं करोति । अत एव गुरोः समक्षं न रिक्तपाणिः गच्छेत् , किन्तु समित्पाणिः गच्छेत् । समिधः यज्ञार्थं भवन्ति । प्रतिकाष्ठं वह्निर्निगूढः । अतो व्यासपीठस्य समक्षं ये श्रोतारन्ति आगच्छन्ति ते सर्वे समित्पाणयः सन्ति । कोऽपि पत्रेण मां कथयति, "मम द्वेषं प्रज्वालयतु , मम क्रोधं प्रज्वालयतु, मम निन्दां प्रज्वालयतु" इति । अहमपि सर्वाणि काष्ठानि यज्ञे जुहोमि । अत एव समित्पाणिर्भूत्वा स्वदोषान् प्रज्वालयितुं गुरुदर्शनार्थं गच्छतु ।

**१३६. सत्यर्थो न शब्दकोशे – किन्तु जीवनकोशे ।**

पञ्चवट्यां लक्ष्मणः रामं पञ्चप्रश्नान् अपृच्छत् । स अपृच्छत् , "किमस्ति भक्तिरिति ?" तदा भगवान् ठक्कुरः प्रियवचनम् अब्रवीत् —

**भगति तात अनुपम सुख मूला ।**
**मिलइ जो संत होई अनुकूला ॥**

भक्तिरनुपमसुखस्य मूलम् । यदा भक्तिः प्राप्यते तदा सर्वमपि अनुकूलं भवति । धर्मस्य फलं वैराग्योऽस्ति । न प्रवृत्तिविस्तारको धर्मः, किन्तु धर्मेण प्रवृत्तिभ्यः शनैः शनैः विरतिः प्राप्यते । धर्मोऽर्थात् सत्यम् । ईश्वरः सत्यस्य पर्यायः । अत एव गान्धिमहात्मना कथितं यत् , "सत्यमेव ईश्वर" इति । ईसुख्रिस्तेन प्रेम एव परमात्मना इति कथितम् । मम जीवनयात्रायाः सारः सत्यं, प्रेम, करुणा च – एतत्त्रयं वर्तते । इयं मम त्रिचक्रिका । यस्यां कोऽपि बालक उपविशति किन्तु किमस्ति सत्यम् ? साहित्यकाराणां समीपे एकदा मम प्रवचनम् आसीत् तदा मया कथितं,

''कामं मम सत्यं भवेत् किन्तु युष्माकम् अपि किञ्चित् सत्यं स्यात् । आवयोः सत्ययोरुपरि परमसत्यमप्यास्ति । परमसत्यं सर्वस्य अपि च सर्वस्य वर्तते । यदि अहं शिक्थवर्तिं प्रज्वालयेयं तदा सा मम सत्यमस्ति । यदि भवान् दीपं प्रज्वालयेत् तदा तद् भवतः सत्यमस्ति । किन्तु सूर्य आवयोः सत्यमस्ति । अतः सूर्यं सर्वस्य सत्यमस्ति । सूर्यो जगत आत्मा जगतश्चक्षुः । सूर्यः शिवस्य नेत्रम् । वयं सर्वे शिवस्य अंशाः – जीवाः । अतः सूर्यः अस्माकं सर्वेषां नेत्रमस्ति । अस्माकं सर्वेषां सत्यमस्ति ।''

भीष्मः प्रतिज्ञाम् अकरोत् यद् , ''अहं कृष्णं शस्त्रं ग्रहीतुं विवशं करीष्यामीति ।'' कृष्णः प्रतिज्ञाम् अकरोत् यद् ''अहं यस्मिन् कस्मिन्नपि पक्षे शस्त्रं न ग्रहीष्यामीति, किन्तु भीष्मो रुद्ररूपोऽभवत् तदा गोविन्दः स्वसारथित्वं विहाय रथाद् अवरुह्य रथचक्रं स्वहस्ते धृत्वा भीष्मं प्रति अधावत् – इत्थं भक्तस्य प्रतिज्ञां यथार्थां कर्तुं कृष्णः प्रतिज्ञाभङ्गमकरोत् , किन्तु उत्तराया मृतगर्भं जीवापयितुं कृष्णोऽवदत् यद् , ''यदि मया कदापि असत्यं नोक्तं स्यात् तदा बालकोऽयं पुनर्जीवितो भवेदिति , तदा बालकः पुनर्जीवितोऽभवत् । इदं मम परमात्मनः सत्यमासीत् । अत एव अहं कथयामि यत् , ''सत्यस्य अर्थो जीवनकोशे वर्तते — न शब्दकोशे । **सत्यं ग्रन्थात् न प्राप्यते किन्तु यदा ग्रन्थयो भिद्यन्ते तदा प्राप्यते ।** यदा अस्माकं पूर्वग्रहा हठाग्रहाः विगलिष्यन्ति तदा ग्रन्थयोऽपि नंक्ष्यन्ति । गोस्वामिनः कथितं ''**धरम न दूसर सत्य समाना ।**'' अर्थात् सत्यसदृशः नास्त्यन्नधर्मः, इति । मया सोमनाथस्य कथायां कथितं यद् , ''विचारे





सत्यं, उच्चारणे सत्यं, आचारेऽपि सत्यं – **एतत् त्रिविधं सत्यं सत्यमेव शिवस्य त्रिपुण्डमस्ति ।** यद्यपि व्यवहारे सत्याचरणं कठिनं किन्तु सत्यं ब्रूयात् , प्रियं ब्रूयात् इति कर्तुं शक्यम् । सत्यं वक्तुं वयं प्रयत्नं करवाम । वयं पणवं वा मृदङ्गं वा वादयितुं सततं प्रयत्नं कुर्मः । ततः शनैः शनैः अभ्यासवशात् वयं पाणविकाः, मार्दङ्गिका वा भविष्यामः । तथैव यदि वयं सत्यं वक्तुम् अभ्यासं करिष्यामः । केवलम् अयम् अभ्यासस्य प्रश्नोऽस्ति ।

बन्धवः ! वयम् अस्माकं जीवनस्य सत्येन रामस्य, कृष्णस्य शिवस्य वा सत्यं परीक्षितुं प्रयत्नं कुर्मः । वयम् अस्माकं लघ्व्या मापिकया कृष्णस्य सत्यं अभिमिमातुं प्रयत्नं कुर्मः । अस्माकं मापिकाः कृष्णस्य सत्यं मापयितुं न शक्ताः, किन्तु सत्यं शीलयुक्तं भवेत्, चारित्र्ययुक्तं भवेत् ।'' अत एव ''पानबाई'' इत्याख्या साध्वी कथयति यत् , ''**वयं नुमः । शीलवतं साधुजनान् वारं वारं येषां व्रतानि न परिवर्तितानि भवन्ति । येषां चित्तवृत्तयः सदैव निर्बलाः भवन्तीति**''– इत्थं जीवनकोशे सत्यस्य परमार्थो निहितो अस्ति ।